ॐ

समर्पणम्

श्रीमते रामानुजाय नमः

प्रथमन्यत्राद्यावधि, क्वापि देवनागराक्षरेष्वमुद्रितः
शारीरकसूत्रसंक्षिप्तभाष्यरूपः ।

श्रीद्भगवद्रामानुजाचार्य्य–विनिर्म्मितो–

# वेदान्तसारः

स्वीयदेवकीनन्दनाख्यमुद्रणालये मुद्रापयित्वा,

श्रीभागवताचार्याऽनुमत्या

नित्यस्वरूपब्रह्मचारिणा मया

राजमान्यराज्यश्रीयुतानाम्, नरेन्द्रवर्य–

श्री १०८रीवाँधिपतिसमार्च्चितपूज्यपादानाम्,

परोपकारार्थैकजनुषाम्, महताम्, आचार्य्यवर्य्य–

श्री १०८

## श्रीरामप्रपन्नस्वामिनाम्

रात्रिन्दिवमालापुस्तकव्यग्रयोः

श्रीमत्करारविन्दयोस्समर्पितो हंसीयताम्

२५१
रामा।वै

श्रीमते रामानुजाय नमः

जयति पराशरसूनुः सत्यवतीनन्दनो व्यासः ॥
यस्याऽऽस्यकमलगलितं वाङ्मयममृतं जगत्पिबति ॥ १ ॥
यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहतस्तदितराणि तृणाय मेने ॥
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धो-
रामानुजस्य चरणौ शरणं प्रपद्ये ॥ २ ॥
रामानुजमुनिर्जीयाद्यो हरेर्भक्तियन्त्रितात् ॥
कलिकोलाहलक्रीडामुखाग्रहमपाहरत् ॥ ३ ॥
जयति सकलविद्यावाहिनीजन्मशैलो-
जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ॥
निखिलकुमतिमायाशर्वरीबालसूर्यो-
निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ ४ ॥
मूले निविश्य महतां निगमद्रुमाणाम्
मुष्णन्प्रतारकभयं धृतनैकदण्डः ॥
रङ्गेशभक्तजनमानसराजहंसो-
रामानुजः शरणमस्तु मुनिः स्वयं नः ॥ ५ ॥
तस्मै रामानुजार्याय नमः परमयोगिने ॥
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥ ६ ॥
अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः ॥
दर्शयन्तु प्रसादेन स्वं भावमखिलं इदम् ॥ ७ ॥

---

॥ श्रीः ॥

# निवेदनपत्रम्

इत्थमत्रभवन्तोविदाङ्कुर्वन्तु दैवीं सम्पदमभिजाताः !!! यदिहार्थ-धर्म्मकाममोक्षाख्यपुरुषार्थचतुष्टये मोक्षएव परमपुरुषार्थइत्येव परमवैदिकसिद्धान्तः ॥ तादृशमोक्षस्य "ऋतेज्ञानान्नमुक्तिः" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुत्या ब्रह्मविषयज्ञानैकसाध्यत्वात् तद्विषयकं ज्ञानमिह सम्पादनीयम् ।

तद्विषयकञ्च ज्ञानं, ब्रह्ममीमांसायाः ब्रह्मविचारैकरूपत्वाच्छारीरकमीमांसाऽध्ययनावसेयम्, इत्यापतितं क्रमेण शारीरकमीमांसाध्ययनेन ॥ सम्प्रति च सन्ति बहूनि ब्रह्ममीमांसाविवरणानि तेषु प्रचुरप्रचारं श्रीशाङ्करभाष्यमिति तदेव ब्रह्मजिज्ञासयाऽध्येतव्यमुताऽन्यदिति चिन्तायां तदेवेति पूर्वः पक्षः ॥ तथाह्यासेतुशीताचलम् ( ब्रह्मैव सत्यं तद्व्यतिरिक्तः कृत्स्नप्रपञ्चो—मिथ्या ब्रह्मापि ज्ञातृज्ञेयभावशून्यान्निर्विशेषमनुभूतिमात्रम् मोक्षश्च जीवभावविनाशः ) इत्यादितदुदितज्ञानस्यैव ( वेदान्तविज्ञानम् ) इति प्रसिद्धिः । तदर्थजातं जानन्त एव वेदान्तिन इति व्यपदिश्यन्ते तस्मान्मुमुक्षोर्मोक्षोपयोगिज्ञानोपलब्धये तदध्ययनमेवयुक्तमिति. ॥ अत्र ब्रूमः, ब्रह्मजिज्ञासया न युक्तमिति । तदुदितज्ञानस्य प्रतारणार्थत्वात् पुराणादौ तथैव प्रसिद्धेः ॥ तथाहि पुरा त्रयीधर्म्मपरैर्नमुच्यादिदैत्यैः पराजितान् स्वशरणमागतानिन्द्रादिकानमरान् रिरक्षिषुणा शरणागतरक्षणैकदीक्षेण श्रीपुण्डरीकाक्षेण दैत्यान्मोहयितुम् पाषण्डपथप्रवर्त्तनाय समाज्ञप्तो भगवान् भवानीपतिः कणादादिजमदग्न्यन्तान्दश महर्षीन् स्वकीयया तामस्या शक्त्या समाविश्य,तामसस्मृतिपुराणानि प्रवर्त्य,वेदविरुद्धधर्म्मानुपादिश्य, दैत्यान्विमोहयन् स्वयमपि कपालभस्मास्थिचर्म्मादीनि वेदबाह्य-

चिन्हानि दधत् । कङ्कालशैवपाषण्डमहाशैवादिभेदभिन्नवाममतप्रतिपादकपाशुपततन्त्रञ्चाऽरभत । ततश्च ते दैत्यास्तत्प्रवर्त्तितपाशुपततामसस्मृतिपुराणादिप्रतिपादितमतमवलम्ब्य त्यक्तत्रयीधर्म्माणो—भगवद्विमुखास्तत्त्वतश्च विमुखास्सन्तः सुखेनैव देवैः पराभवं नीता इति—पाद्मोत्तरखण्डचत्वारिंशाध्यायेऽभिहितम् ॥ अथैकचत्वारिंशे । "तामसानि च शास्त्राणि समाचक्ष्व ममाऽनघ ! । सम्प्रोक्तानीह यैर्विप्रैर्भगवद्भक्तिवर्जितैः ॥ तेषां नामानि क्रमशः समाचक्ष्व सुरेश्वर ! " इति भवान्या पृष्टः श्रीरुद्र उवाच "प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैस्सम्प्रोक्तानि ततः परम्" ॥ इत्युक्त्वा, ततो वैशेषिकन्यायसाङ्ख्यलोकायतशास्त्राणां क्रमेण कणादगौतमकपिलबृहस्पतिप्रणीतत्वम् बौद्धशास्त्रस्य बुद्धरूपिणा विष्णुनैव प्रणीतत्वञ्चोक्त्वा पूर्वकलियुगादौ स्वेनैव प्रपञ्चितस्य भविष्यकलियुगे स्वेनैव प्रपञ्चयिष्यमाणस्य च मायावादाख्यस्य प्रच्छन्नबौद्धशास्त्रस्य स्वरूपमाह "मायावादमसच्छास्त्रं प्रच्छन्नम्बौद्धमुच्यते । मयैव कथितं देवि ! कलौ ब्राह्मणरूपिणा ॥ अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् । कर्म्मस्वरूपत्याज्यत्वमत्र वै प्रतिपाद्यते ॥ परात्मजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते ॥ ब्रह्मणोऽस्यपरं रूपं निर्गुणं वक्ष्यते मया ॥ सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौयुगे ॥ वेदार्थवन्मह[illegible]च्छास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि ! जगतां ना[illegible]शकारणात्" इत्यादिना ॥ अत्र च शास्त्रे ब्रह्मातिरिक्तस्य [illegible]मायामात्रवादित्वं कलौ ब्राह्मणरूपेण कथितत्वं परात्मजी[illegible]वयोरैक्यं ब्रह्मस्वरूपस्य निर्गुणत्वञ्च सम्यगुपलभ्यते ॥ पूज्यपादा[illegible]णां श्रीशङ्कराचार्याणां श्रीशङ्करांशावतारत्वञ्च लोकशास्त्रोभयप्र[illegible]सिद्धमेव, इति पूर्वोपन्यस्तजगन्मिथ्यात्ववाद—जीवब्रह्मैक्यवाद[illegible]—ब्रह्मनिर्विशेषत्ववादादिमतस्योक्तलक्षणसम्पन्नत्वादासुरजनमो[illegible]हनप्रवृत्तवामदेवक-

लिपतत्वम्, वेदवादाऽभ्युपगमच्छद्मच्छन्नत्वात्प्रच्छन्नबौद्धत्वञ्च सुस्पष्टम् ॥ एवं हरिवंशे भविष्यपर्वणि चतुर्थाध्याये भविष्यत्कलिधर्म्मस्वरूपं पृष्टोभगवान्बादरायणो वेदबाह्यबौद्धचार्वाकादिमतं प्रदर्श्य पश्चाद्वेदवादच्छद्मच्छन्नं प्रागुदाहृतमायावादिमतमपि नास्तिकमतमित्येव निरूपितवान् श्लोकद्वयेन ॥ "नास्तिक्यपरमाश्चापि केचिद्धर्म्मविलोपकाः । भविष्यन्ति नरा मूढा मन्दाः पण्डितमानिनः ॥ तदात्वमात्रश्रद्धेयाश्शास्त्रज्ञानबहिष्कृताः । दाम्भिकास्ते भविष्यन्ति वादशीलकुतूहलाः„ इति. अत्र शाङ्करमतानुयायिन एव दूष्यन्ते न बौद्धादयस्तेषांस्वरूपस्य पूर्वमुक्तत्वात् ॥ युक्तमेषामेवनास्तिक्यपरमत्वं वेदाऽभ्युपगमेन–आस्तिकवद्भासमानानामप्येतेषां नास्तिक्यमेव परमं प्रयोजनमतस्ते नास्तिक्यपरमाः ॥ तथाहि ब्रह्मातिरेकिणस्सर्वस्य जगतो मिथ्यात्वात्तन्नास्त्येव । अवशिष्टमेकं ब्रह्म तदप्यशेषविशेषैर्विधुरन्निर्विशेषमित्येव वदन्ति । तथाच ब्रह्मास्तीत्युक्तौ ब्रह्मणोऽस्तित्वरूपविशेषाक्रान्तत्वापत्तिभिया तथा कथनासम्भवे नास्तिकत्वं पर्यवसानवशादागतमिति परमं फलमेतेषां नास्तिक्यमिति सिद्धमेषामेव नास्तिक्यपरमत्वम्. धर्म्मविलोपकत्वञ्च, दैत्यमोहनप्रवृत्तवामदेवमतानुयायित्वात् । तदात्वमात्रश्रद्धेया इति ॥ वेदवादच्छद्मच्छन्नत्वान्मन्दबुद्धिभिरिमे वैदिका इति तत्कालमात्रविश्वसनीयाः ॥ वस्तुतस्तु, शास्त्रज्ञानबहिष्कृताः । वास्तवशास्त्रतात्पर्यज्ञानविरहिताः दाम्भिकत्वादिकञ्च स्पष्टमेवैषाम् ॥ एवं शाङ्करमतन्दूषयित्वा "कलौ खलु भविष्यन्ति नारायणपरायणाः" इत्याद्युक्तनारायणपरायणाग्रगण्य–श्रीमदादिशेषावतारभूत––श्रीभगवद्रामानुजमुनिवर्द्धितसम्प्रदायमेव बहुमेने बादरायणः "तदा विचालिते धर्म्मे जनाश्शेषपुरस्कृताः । शुभान्येवाचरिष्यन्ति दानसत्यसमन्विताः" इति ॥ अत्र शेषो ह्यादिशेषः पुरस्कृतो यैस्ते शेषपुरस्कृताः श्रीरामानुजार्यरूपेणाऽवतीर्णमादि-

शेषं पुरस्कुर्वन्तो जनाः शुभान्याचरिष्यन्तीति निगूढो बादराय-
णाशयः ॥ शेषपुरस्कृतत्वञ्च श्रीमन्निम्बार्क—श्रीवल्लभप्रभृतिसम्प्र-
दायिनामपि सम्भवत्युक्तिकम् ॥ यतः प्रथमतः श्रीरामानुजाचार्य-
प्रणीत—श्रीभाष्योक्तिरेवप्रचण्डमार्तण्डप्रभेव गाढान्धतमसमद्वै-
तवादध्वान्तविध्वंसनक्षमा ॥ न तथाऽन्योक्तिरिति स्वस्वसम्प्रदा-
यकूटस्थानां सूत्रविवरणानि श्रीभाष्यञ्चावलोकयतामद्वैतिप्रति-
पत्तिविपश्चितां हृदि तत्क्षणमेव सशिरःकम्पमधिरोहति ॥ श्रीरा-
मानुजाचार्य्याणां शेषावतारत्वबोधकमन्यदपिप्रमाणमुपलभ्यते ।
यथा श्रीपञ्चरात्रे बृहद्ब्रह्मसंहितायां द्वितीयपादे सप्तमाध्याये
श्रीरङ्गक्षेत्रवर्णनप्रस्तावे ॥ "यत्र मे लोककल्याणकारिणी परमा कला
द्विजरूपेण भविता सा तु सङ्कर्षणाभिधा ॥ द्वापरान्ते कलेरादौ
पाषण्डप्रचुरे जने" । इति अत्र हरिवंशवचनैतद्वचनयोरेककण्ठये-
नैककालबोधकतया, श्रीरङ्गक्षेत्रे लोककल्याणकारित्ववर्णनाद-
यमेव श्रीरामानुजो मुनिरादिशेषावतारभूत इति सुस्पष्टम् ॥ ...यते
निरवधिपाण्डित्यमत्रभवतां श्रीभगवच्छङ्करपा... दर्शयँल्लोक-
त्रिवचसां प्रबाहं परावर्त्यैतच्छास्त्रस्य... ...धते ॥ परात्मजीव-
सायित्वमुपदर्शितम् । ततोऽप्यतित... ...परं रूपं निर्गुणं वक्ष्यते
ध्यकाराणां यैःपुनरपि ब्रह्म... कलौयुगे ॥ वेदार्थवन्मह...
साहितं प्राचीनपन्थानमनादृ... ...र्थं कथितं देवि ! जगतां ना...
भगवच्छङ्करपादैस्सूत्रत... शास्त्रे ब्रह्मातिरिक्तस्य ... ...श-
नाधारीकृत्य,स्वातन्त्र्येण कथितत्वं परात्मजी... ...माया-
यैस्तु श्रीबादरायणोपदिष्टलभ्यते ॥ पूज्यपादा... ...वयोरैक्यं
नमहर्षिप्रणीतां वृत्तिमनुश्लोकशास्त्रोभयस... ...णां श्रीशङ्करा-
दैस्तु प्रत्युतोपनिषद्भाष्य ब्रह्मैक्यवाद... ...सिद्धमेव, इति
नात्रभगवदाज्ञामनुतिष्ठतां ...सुरजनमो... ...ब्रह्मनिर्विशेषत्व-
परश्च तत्र श्रद्धारुचिविश्व।—— ... —ब्रह्मप्रवृत्तवामदेवक-
...हितनप्रवृ...

जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमाङ्गतिम्” इतिभगवदुक्तासुरप्रकृतीनामेवजायन्ते । प्राक्तनदुश्चरितविपाकाऽतिरोहितधियान्तु, तत्र श्रवणादौ प्रवृत्तिरपि दुःसाध्या ॥ तथोक्तं श्रीभाष्यकारपरमाचार्य्यश्रीमद्यामुनमुनीनामपि परमपरमाचार्य्यैः श्रीमन्नाथमुनिभिः “निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्त्तते ॥ अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥ मयि-नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति” इत्यादिकारिकाभिः ॥ अपिचास्मिन्नर्थे संशेताऽस्माम कश्चिदपिपश्चिन्न बुधः सन्देग्धुमर्हति ॥ एवञ्च तत्त्वजिज्ञासुना मुमुक्षुणा श्रीबादरायणीयशारीरकहार्दावगतये तच्छिष्य-श्रीबोधायनमहर्षिप्रणीतवृत्त्यनुसारिविवरणमेवादरणीयन्तु शाङ्करमिति सुनिश्चितम्-सम्प्रति च तद्वृत्त्यनुसारिणोवेदान्तिनश्श्रीमद्रा-स्तीत्त्राचार्या एव. तत्प्रणीताश्च वेदान्तग्रन्थाः “वेदान्तसारो वेदान्त-कथनासम्भर्व ङ्ग्रहः । श्रीभाष्यश्चापि गीताया भाष्यं चक्रे यतीश्वरः” तेषां नास्तिक्यमिति ।..न्ति ॥ तत्र वेदार्थसङ्ग्रहस्तूपनिषत्तात्पर्य्य-पकत्वञ्च, दैत्यमोहनप्रवृत्तवाम तात्पर्यं विशदयति. अवशिष्टास्त्रिकं श्रद्धेया इति ॥ वेदवादच्छद्मच्छन्नर्तरावेदान्तसारम्मुद्रिता एव तत्कालमात्रविश्वसनीयाः ॥ वस्तुतश्चद् बृहद्व्याख्यानं श्रीभाष्य-वास्तवशास्त्रतात्पर्यज्ञानविरहिताः दाम्भिचण्डपाण्डित्यैः “नहि-वैषाम् ॥ एवं शाङ्करमतन्दूषयित्वा “कलौ ात्स्वातन्त्र्येण सकलशा-यणपरायणाः” इत्याद्युक्तनारायणपरायणाऽप्रतिरुद्धलेखनीसञ्चारैः षावतारभूत--श्रीभगवद्रामानुजमुनिवर्द्धितान्तशास्त्ररसिकजनोपका-बादरायणः“तदा विचालिते धर्म्मे जनाश्म्मुद्रापितम् ॥ द्वितीयस्त-चरिष्यन्ति दानसत्यसमन्विताः” इति शप्रचारेप्सुना श्रीमदाचा-पुरस्कृतो यैस्ते शेषपुरस्कृताः श्रीरामातृस्कृतपुस्तकावल्यां संशोध-

कीभूय मुद्रापितः॥ तृतीयश्चायं वेदान्तसारो—वेदान्तदीपादत्यतिसङ्क्षिप्तः सूत्रार्थमात्रमधिजिगांसूनामतिसौकर्य्यावहो—नाद्यावधि देवाक्षरैः क्वापि मुद्रितस्तमिमं वेदान्ततीर्थमवगाहितुमनसामाद्विसोपानततिरूपं ग्रन्थरत्नम्मुद्रापयितुमुत्सुकोऽहम्। श्रीमदस्मदाचार्य्याणां श्री ६ बलरामस्वामिनामाज्ञाम्पुरस्कृत्य प्राचीनवैष्णवग्रन्थजीर्णोद्धरणबद्धदीक्षं श्रीगौडेश्वरसम्प्रदायानुगामिनं सदसद्विवेचनचातुरीधुरीणं श्रीनित्यस्वरूपब्रह्मचारिणम एतद्ग्रन्थमुद्रणप्रस्तावमुद्भाव्य न्यवेदयम्. सच श्रुत्वैव सञ्जातहर्षप्रकर्षः तत्क्षणमेवैतन्मुद्रणकार्यमनुमेने॥ ततश्चास्मिन्विक्रमीये (१९६२) द्विरसनवेन्दुवत्सरे जेष्ठशुक्लगुरुपञ्चम्याम्मुद्रणकार्य्यमारब्धम् एतत्संशुद्धिमभीप्सतामद्य पुस्तकद्वयं नागराक्षरं तत्रैकं (क) पुस्तकमस्मदीयम् (ख) पुस्तकं श्रीमधुसूदनपण्डितानाम्, एकमान्ध्राक्षरं मुद्रितं श्रीरामानुजपण्डितानामेवं पुस्तकत्रयं संगृह्य संशोधनमारब्धम्। तत्रापि नरासाधारणभ्रमप्रमादादिदोषेण साम्प्रतिकसंशोधनसम्प्रदायविरोधोऽक्षरादिप्रच्युतिदोषो वा क्वचिदुपलभ्येत सन्तन्तव्यो दोषज्ञैः——————

इति निवेदयति त्रिदण्डिवैष्णवपरिचर्योत्सुकः

श्रीमदुभयवेदान्तवासितस्वान्त—

श्री६सुदर्शनाचार्यान्तेवासी,

भवदीयो—भागवताचार्यः

॥ श्रीः ॥

श्रीं विष्णवे नमः ॥

श्रीमते विष्वक्सेनाय नमः ॥

नमः प्रातःस्मरणीयेभ्यः श्रीभाष्यकारचरणकमलेभ्यः

श्री ६ मद्भगवद्रामानुजाचार्य्यविरचितो,

# वेदान्तसारः ॥

## श्रीमते रामानुजाय नमः ॥

समस्तचिदचिद्वस्तु—शरीरायाऽखिलात्मने ॥
श्रीमते निर्म्मलानन्दो—दन्वते विष्णवे नमः ॥ १ ॥

श्रीमत्परमपुरुषप्रसादेन वेदान्तसाररसमुद्ध्रियते ॥

## *श्रीः ॥ अथाऽतो ब्रह्मजिज्ञासा ॥ श्रीः १।१।१।

अत्राऽयमथशब्द आनन्तर्य्ये वर्त्तते अतश्शब्दशिरस्कत्वात् अतश्शब्दः पूर्ववृत्तस्य हेतुभावे । पूर्ववृत्तञ्च कर्मज्ञानमिति विज्ञायते प्रारीप्सितस्य ब्रह्मज्ञानस्य वेदार्थविचारैकदेशत्वात् । अधीतवेदस्य हि पुरुषस्य कर्म्मप्रतिपादनोपक्रमत्वात् । इदानीं कर्म्मविचारः प्रथमं कर्तव्य—इति "अथाऽतोधर्म्मजिज्ञासा" (क) इत्युक्तम् । कर्म्मणाञ्च प्रकृतिविकृतिरूपाणां धर्म्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः । प्रभुत्वादार्त्विज्यमित्यन्तसूत्रकलापेन सङ्कर्षेणन कृतः । एवं वेदस्यार्थवत्त्वे कर्म्मणाञ्च तदर्थत्वे तेषाञ्च केवलानां त्रिवर्गफलप्रदत्वे निश्चिते सति वेदैकदेशभूतवेदान्तभागे केवलकर्म्मणाम्

---

* चिन्हमेतदधिकरणारम्भसूचकम् ।

(क) पू० मी० १।१।१।

अल्पाद्दिथरफलत्वम् ब्रह्मज्ञानस्यचानन्तादिथरफलत्वम् आपा-
ततोदृष्ट्वा अनन्तरं मुमुक्षोरवधारितपरिनिष्पन्नवस्तुबोधजननशब्द-
शक्तेः पुरुषस्य ब्रह्मबुभुत्सा जायते इति "अथाऽतोब्रह्मजिज्ञासा"
इति कर्मविचारानन्तरं ततएव हेतोर्ब्रह्मविचारः कर्तव्य इत्यु-
क्तम्भवति ॥ तदिदमाह श्रुतिः । "परीक्ष्य लोकान् कर्म्मचितान्
ब्राह्मणो-निर्वेदमायात् नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवा-
भिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय
सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच
तां तत्त्वतोब्रह्मविद्याम्" (ख) इति ब्राह्मणोवेदाभ्यासरतः कर्म्मचितान्
कर्मणा सम्पादितान् लोकान् आराध्य क्षयिष्णुत्वेन क्षयस्वभावान्
कर्म्ममीमांसया परीक्ष्य अकृतो नित्यः परमपुरुषः कृतेन कर्मणा ना-
स्ति न सम्पाद्य इति योनिर्वेदमायात् स तद्विज्ञानार्थं गुरुमेवाभिग-
च्छेत्समित्पाणिः श्रोत्रियं, वेदान्तविद्यानिष्ठम् । ब्रह्मनिष्ठं, साक्षात्कृत-
परमपुरुषस्वरूपं स गुरुः सम्यगुपसन्नाय तस्मै येन विद्याविशेषेण
अक्षरं सत्यं परमपुरुषं विद्यात् तां ब्रह्मविद्यां प्रोवाच प्रब्रूयादित्यर्थः ॥
स गुरुमेवाभिगच्छेत् । तस्मै स विद्वान् । प्रोवाचेत्यन्वयात्
अप्राप्तस्या- विधावपि लिटोविधानात् ॥ छन्दसि लुङ् लिङ् लिटः
३ । ४ । ६ ॥ १ ॥ इति जिज्ञासाधिकरणम् ॥

## ❀ श्रीः ॥ जन्माद्यस्य यतः ॥ श्रीः १ । १ । २ ॥

अस्य विचित्र किञ्चिन्मिश्रस्य व्यवस्थितसुखदुःखोपभोगस्य
जगतोःजन्मस्थितिलया यतस्तद्ब्रह्मेति प्रतिपादयति श्रुतिरित्यर्थः ॥
"यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसं-
विशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" [ग] इति । सूत्रे यत इति हेतौ पञ्चमी

---

( ख ) मुण्डकोप० १ । २ । ११ ।
( ग ) तै० भृ० १ ।

जनिस्थितिलयानां साधारणत्वात् ॥ जनिहेतुत्वञ्च निमित्तोपादान-रूपं विवक्षितम् यत इति हि श्रुतिरिहोभयविषया कथमिति चेत् "यतोवा इमानि" इति प्रसिद्धवन्निर्देशात् । प्रसिद्धेश्चोभयविषयत्वात् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [१] "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" (घ) इत्यत्र सदेवेदमग्र एकमेवासीदिति उपादानतां प्रतिपाद्य अद्वितीयमिति अधिष्ठात्रन्तरनिवारणात् सच्छब्दवाच्यं ब्रह्मैव निमित्तमुपादानञ्चेति विज्ञायते । तदैक्षत बहुस्यां प्रजायेयइत्यात्मन एव विचित्र स्थिरत्र स्वरूपेण बहुभवनं सङ्कल्प्य तथैव सृष्टिवचनाच्च । अतः श्रुतावपि यत इति हेतौ पञ्चमी अतएव ब्रह्मणोजगन्निमित्तत्वमुपादानत्वञ्च प्रतिपादितम् अर्थविरोधाद् "अस्मान्मायी सृजते विश्वमेतद्" [ङ] इत्यादिविशेषश्रुत्या चाक्षिप्य प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् १।४।२३॥ अभिध्योपदेशाच्च ॥ २४ ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥ आत्मकृतेः ॥ २६ ॥ इत्यादिभिः सूत्रैः परिहरिष्यते ॥ ननुच ! सर्वज्ञं सर्वशक्तिं सत्यसङ्कल्पं नित्यनिरवद्यतया निरस्तसमस्तापुरुषार्थगन्धं ब्रह्मैवात्मानं विचित्र चिदचिन्मिश्रं जगद्रूपमिदं सर्वमसृजतेति कथमुपपद्यते तदेतत्सूत्रकारः स्वयमेव परिचोद्य परिहरिष्यति ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् । १ ।२। ८ ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २।१।२१॥ इति चोद्यम् । परिहारस्तु । न तु दृष्टान्तभावात् २।१।९॥ अधिकन्तु भेदनिर्देशात् २।१।२२॥ इति च "क्षरन्त्वविद्याह्यमृतन्तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः" (च)॥ स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न

---

(घ) छा० उ० ६।२।१। [१] छा० ६।२।१।

(ङ) श्वे० उ० ४।९॥

(च)

चाधिपः (छ) "क्षरं प्रधानममृताक्षरं हरः, क्षरात्मानावीशते देव एकः" (ज)अमृताक्षरं हरः, अचिद्वर्गं स्वात्मनो भोग्यत्वेन हरतीति भोक्ता हर-इत्युच्यते ॥ " द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" (झ) इत्यादिश्रुतिस्मृतिगणैः प्रत्यगात्मनो ब्रह्मणो भेदेन निर्देशात् परमपुरुषार्थभागिनः प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म तच्च प्रत्यगात्मशरीरितया तदात्मभूतं प्रत्यगात्मनस्तच्छरीरत्वं ब्रह्मणस्तदात्मत्वञ्च "य आत्मनि तिष्ठन् । यस्यात्मा शरीरम् [ ञ ] एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः [ ट ] इत्यादिश्रुतिशतसमधिगतं सशरीरस्यात्मनः कार्य्यावस्थाप्राप्तावपि गुणदोषव्यवस्थितेर्दृष्टान्तभावात् ब्रह्मणि नदोषप्रसक्तिरितिनासामञ्जस्यं वेदान्तवाक्यस्येति "न तु दृष्टान्तभावाद्" इत्युक्तम् । दृष्टान्तश्च देवमनुष्यादिशब्दवाच्यस्य शरीरस्यात्मनः मनुष्यो बालो युवा स्थविर इति नानाविधावस्थाप्राप्तावपि बालत्वयुवत्वस्थविरत्वादयः शरीरगतादोषा नात्मानं स्पृशन्ति । आत्मगताश्च ज्ञानसुखादयो न शरीरमिति । अतः कार्य्यावस्थं कारणावस्थञ्च ब्रह्म प्रत्यगात्मशरीरितया तदात्मभूतमिति प्रत्यगात्मवाचिना शब्देन ब्रह्माभिधाने तच्छब्दसामानाधि-

---

( छ ) श्वे० उ० ६ । १६ ।

( ज ) श्वे उ० १ ।

( झ ) गी० १५ । १८ ।

( ञ ) माध्यन्दिनपाठे

( ट ) सुबालोप० ७ ख०

करणे च हेतुं वक्तुं निरसनीयं मतद्वयम् ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १ । ४ । २० ॥ उत्क्रमिष्यत एवम् भावादित्यौडुलोमिः । २१ । इत्युपन्यस्य । अवस्थितेरिति काशकृत्स्नः ॥२२॥ इतिहेतुरुक्तः "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवद्" (ठ) इत्यादिना प्रत्यगात्मन आत्मतयावस्थानात् ब्रह्मणस्तच्छब्देनाभिधानं तत्सामानाधिकरण्येन व्यपदेशश्चेत्युक्तम् ॥ तथा "वैषम्यनैर्घृण्ये न सापेक्षत्वात् ॥ २ । १ । ३४ ॥ कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥ इति देवमनुष्यादिविषमसृष्टेर्जीवकर्मनिमित्तत्वम् ॥ जीवानां तत्तत्कर्मप्रवाहाणाञ्चानादित्वं प्रतिपाद्य तदनादित्वञ्च "नित्यो नित्यानाञ्चेतनश्चेतनानामेको---बहूनां यो विदधाति कामान् (ड) "ज्ञाज्ञौ द्वावजावीशानीशौ" [ ढ ] इत्यादिश्रुतिषूपलभ्यते इत्युक्त्वा तदनादित्वेऽपि प्रलयकाले चिदचिद्वस्तुनोर्भोक्तृभोग्ययोर्नामरूपविभागाभावाद् "आत्मा वा इदमेकमेवाग्र आसीन्नान्यत् किञ्चन मिषद्" [ ण ] इत्यादौ एकत्वावधारणमुपपद्यते इति सूत्रकारेण स्वयमेवोक्तम् । तथा च । नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः २ । ३ । १८ ॥ इति प्रत्यगात्मनो नित्यत्वादनुत्पत्तिमुक्त्वा ॥ ज्ञोऽत एव ॥ १९ ॥ इति तस्य ज्ञातृत्वमेव स्वरूपमित्युक्तम् ॥ उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥ इत्यादिनाणुत्वञ्चोक्तम् ॥ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥२९॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥ इति ज्ञातुरेवात्मनो ज्ञानशब्दव्यपदेशो ज्ञानगुणसारत्वात् ज्ञानैकनिरूपणीयस्वभावत्वाच्चेत्युक्तम् ॥ नित्योपलब्ध्यनुपलब्धिप्रस-

---

( ठ ) तै० आ० ऋ । ४ ।

( ड ) श्वे० उ० ।

( ढ ) श्वे० उ० १ । १ । ७ ।

( ण ) ऐत० १ । १ । १ ।

ङ्गोऽन्यतरनियमोवान्यथा॥ ३२ ॥इतिज्ञानमात्रस्वरूपात्मवादे हेत्वन्तरायत्तज्ञानात्मवादे सर्वगतात्मवादे च दोष उक्तः ॥ कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ उपादानाद्विहारोपदेशाच्च ॥ ३४॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३५ ॥ उपलब्धिवदनियमः ॥ ३६ ॥ शक्तिविपर्ययात् ॥ ३७॥ समाध्यभावाच्च ॥ ३८ ॥ यथाचतक्षोभयथा ॥३९॥ इत्यात्मनएव शुभाशुभेषु कर्मसु कर्तृत्वं प्रकृतेरकर्तृत्वं । प्रकृतेश्च कर्तृत्वे तस्याः साधारणत्वेन सर्वेषां फलानुभवप्रसङ्गादिति प्रतिपादितम् । परात्तु तच्छ्रुतेः ॥४०॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४१ ॥ इत्यात्मनः कर्तृत्वं परमपुरुषानुमतिसहकृतमित्युक्तम् । अंशोनानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४२ ॥ मन्त्रवर्णात् ॥ ४३ ॥ अपि च स्मर्यते ॥ ४४ ॥ प्रकाशादिवत्तुनैवम् परः ॥ ४५ ॥ स्मरन्तिच ॥४६॥ इति "अनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः [ त ] क्षरन्त्वविद्या ह्यमृतन्तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः, प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् [ थ ] तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति [ द ] ज्ञाऽज्ञौ द्वावजावीशानीशौ, पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति [ध] यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति [न] स कारणं करणाधि

---

( त ) मुण्ड० ३।१।२।

( थ ) बृह० उ० ६।३।२१।

( द ) मुण्ड० उ० ३।१।१।

( ध ) श्वे० उ० १।१७।

( न ) मुण्ड० उ० ३।१।३

पाधिपो न चास्य कश्चिज्जनिता न चाधिपः [ प ] यः सर्वज्ञः स सर्वःवित् [ फ ] परास्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया च [ ब ] निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, [ भ ] नित्योनित्यानाश्चेतनश्चेतनामेकोबहूनां योविदधाति कामान्, [ म ] नित्यानाम्बहूनाञ्चेतनानां यएको नित्यश्चेतनः कामान् विदधातीत्यर्थः "पतिं विश्वस्यात्मेश्वरम् [ १ ] इत्यादिभिः प्रत्यगात्मनः परमात्मनश्च कर्मवश्यत्वेन शोचितृत्वेन असर्वज्ञत्वेन परोपासनायत्तमुक्तित्वेन निरवद्यत्वने सर्वज्ञत्वेन सत्यसङ्कल्पत्वेन सर्वेश्वरत्वेन समस्तकल्याणगुणाकरत्वादिना च स्वरूपस्वभावनानात्वव्यपदेशात् । तयोरेव "तत्वमसि[य]अयमात्मा ब्रह्म[र]योऽसौ सोऽहं योऽहं सोऽसौ [ल] अथ योन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति[व] न सवेद अकृत्स्नोत्द्येषः । आत्मेत्येवोपासीत[श] ब्रह्मदाशा ब्रह्मदासा ब्रह्म"मेकितवा [ ष ] इति च सर्वजीवात्मव्यापि

---

( प ) श्वे ० उ ० ६ । १९ ।
( फ ) मुण्ड ० उ ० १ । १ । १० ।
( ब ) श्वे ० उ ० ६
( भ ) श्वे उ ०
( म ) श्वे ० उ ०
( १ ) तै ० नारा ० ६ । ११ ।
( य ) छा ० उ ० ६ । ८ । ७ ।
( र ) बृह ० उ ० ६ । ४ । ५ ।
( ल )
( व ) बृ ० उ ० ३ । ४ । १० ।
( श ) बृ ० उ ० ३ । ४ । ७ ।
( ष )

त्वेनाभेदव्यपदेशाच्चोभयव्यपदेशाविरोधेन परमात्मांशोजीवात्मेत्य-भ्युपगन्तव्यम् ॥ न केवलं न्यायसिद्धमिदम् । श्रुतिस्मृतिभ्याञ्चांशत्वमुक्तं जीवात्मनः ॥ "पादोऽस्य विश्वा भूतानि" [स] "ममैवांशो-जीवलोके जीवभूतः सनातनः [ह] इति । अंशत्वं नामैकवस्त्वेकदे-शत्वम् ॥ तथा सति—उभयोरेकवस्तुत्वेना विरोधो न स्यादित्या शंक्य "प्रकाशादिवत्तु नैवं पर" इति परिहरति अन्यविशेषणातैक-स्वभाव प्रकाश जाति गुणशरीर विशिष्टानग्नि [ १ ] व्यक्तिगु-णवत्मनः प्रति प्रकाशजातिगुणशरीराणां यथांशत्वम् एवम् परमात्मानं प्रत्यगात्मशरीरकं प्रति प्रत्यगात्मनोंशत्वम् एवमंशत्वे यस्स्वरूपोयत्स्वभावों शोऽजीवः । नैवमंशी परमात्मा । सर्वत्र-विशेषणविशेष्ययोः स्वरूपस्वभावभेदात् । एवञ्च । कर्त्ताशास्त्रा-र्थवत्त्वात् २ । ३ । ३३ ॥ परात्तुतच्छ्रुतेः २ । ३ ।४० इत्यनन्तरोक्तञ्च न विरुध्यते एवं प्रकाशशरीरवत्जीवात्मानामंशत्वं पराश-रादयः स्मरन्ति च "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥ परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् ॥ [ क ] "यत्र किञ्चित्सृज्यते येन सत्वजातेन वै द्विज ! ॥ तस्य सृज्यस्य सम्भूता तत्सर्वं वै हरेस्तनुः ॥ [ ख ] ते सर्वे सर्वभूतस्य विष्णोरंशसमुद्भवाः" ॥ इति अन्यथा पारमार्थिकाऽपारमार्थिको-पाधिसमाश्रयणे प्रत्यगात्मनोंऽशत्वे ब्रह्मण एव वेदान्तनिर्वर्त्याः सर्वे एव दोषा भवेयुरिति आभास एवच २ । ३ । ४९ ॥ इत्यादि-नोक्तम् ॥ अतः सर्वदा चिदचिद्वस्तुशरीरतया तदात्मभूतमेव

---

( स ) पुरुषसूक्ते ३ । २२ [१] पाठा० विशिष्टादित्यव्यक्ति

( ह ) गीता ।

( क ) वि ० पु ०

( ख ) वि० पु ० १ । २२ । २८ ।

ब्रह्म कदाचिदविभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कारणावस्थं कदाचिच्च विभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कार्यावस्थं ब्रह्म सर्वदा चिदचिद्वस्तुशरीरतया तद्विशिष्टत्वेपि ब्रह्मणः परिणामित्वापुरुषार्थाश्रयत्वे शरीरभूतचेतनाचेतनवस्तुगते आत्मभूतं ब्रह्म सर्वदा निरस्तनिखिलदोषगन्धानवधिकातिशयासङ्ख्येयज्ञानानन्दाद्यपरिमितोदारगुणसागरमवतिष्ठत इति ब्रह्मैव जगन्निमित्तमुपादानञ्चेति "यतोवा इमानि भूतानि जायन्ते,, [क] इत्यादिवाक्यं प्रतिपादयत्येवेति "जन्माद्यस्य यतः तद्ब्रह्मेति सुष्ठूक्तम् "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् [ख]" तदैक्षत बहुस्यां प्रजायेय" [ग] इत्यस्य चायमर्थः "यस्यात्मा शरीरं यस्याक्षरं शरीरं यस्य पृथिवी शरीरं यस्याव्यक्तं शरीरम् एष सर्वभूतान्तरात्मा पहतपाप्मा दिव्योदेव एकोनारायणः" [घ] इत्यादिश्रुतेर्ब्रह्मणः सर्वदा चिदचिद्वस्तुशरीरकत्वात्सदेवेदमिदानीं स्थूलचिदचिद्वस्तुशरीरकत्वेन विभक्तनामरूपमग्रे प्रलयकालेऽतिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरतया नामरूपविभागानर्हमेकमेवाऽऽसीत् । स्वयमेव ब्रह्म सर्वज्ञं सर्वशक्ति निमित्तान्तरानपेक्षमद्वितीयञ्चातिष्ठत् "तदैक्षत बहुस्यां प्रजायेय" इति तन्नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतया एकमेवावस्थितं नामरूपविभागार्हस्थूलदशापत्त्याबहुप्रकारं स्यामिति पैक्षत-स्यां प्रजायेय इति व्यष्टिसमष्टि व्यपदेशः चिदचितोः परस्य च प्रलयकालेऽपि व्यवहारानर्हसूक्ष्मभेदः सर्वैर्वेदान्तवादिभिरभ्यु-

---

(क) तै०भृ० १।१६।

(ख) छा० उ० ६।२।१।

(ग) छा० ६।२।३।

(घ) सुबालोप० । ७ खण्डे

येतः । अविद्याकृतभेदस्योपाधिकृतभेदस्य चाऽनादित्वाऽभ्युपगमात् ॥ इयांस्तु विशेषः ॥ ब्रह्मैवाज्ञमनुपाधिसम्बद्धञ्चेति सर्वश्रुतिस्मृतिन्यायविरोधोऽन्येषाम् । तदभावादविरोधश्चास्माकमिति ॥ २ ॥

❀श्रीः ॥ शास्त्रयोनित्वात् ॥ श्रीः १ । १ । ३ ॥

एवं चिदचिद्वस्तुशरीरतया तद्विशिष्टस्य ब्रह्मण एव जगदुपादानत्वं निमित्तत्वञ्च नानुमानादिगम्यमिति शास्त्रैकप्रमाणत्वात्तस्य "यतो वा इमानि भूतानि" इत्यादि वाक्यं निखिलजगदेककारणं ब्रह्मैवेति बोधयत्येवेति सिद्धम् ॥ ३ ॥

इति शास्त्रयोनित्वाधिकरणम् ।

❀श्रीः ॥ तत्तु समन्वयात् ॥ श्रीः १ । १ । ४ ॥

पुरुषार्थतया अन्वयः समन्वयः शास्त्राख्यप्रमाणस्य पुरुषार्थपर्यवसायित्वेऽपि ब्रह्म इयस्य परस्यचाऽनुभवितुरविशेषेण स्वरूपेण गुणैर्विभूत्या चानुभूयमानम् अनवधिकातिशयाऽनन्दरूपमिति पुरुषार्थत्वेनाऽभिधेयतयान्वयात् ब्रह्मणःशास्त्रप्रमाणकत्वमुपपन्नतरमिति निरवद्यम् ॥ निखिलजगदेककारणं ब्रह्म वेदान्ताः प्रतिपादयन्तीत्युक्तम् ॥ तस्यैकस्यैकैव कृत्स्नजगन्निमित्तत्वं तस्यैवोपादानतया जगदात्मकत्वञ्च नानुमानादिगम्यमिति शास्त्रैकप्रमाणकत्वात् । तस्य चानवधिकातिशयानन्दरूपतया परमपुरुषार्थत्वाद्वेदान्ताः प्रतिपादयन्त्येवेति स्थिरीकृतम् ततः परं पादशेषेण जगत्कारणतया प्रधानपुरुषप्रतिपादनानर्हतया सर्वज्ञं सत्यसङ्कल्पं निरस्ताविद्यादिसमस्तदोषगन्धमपरिमितोदारगुणसागरं ब्रह्मैव वेदान्ताः प्रतिपादयन्तीत्युच्यते ॥ ४ ॥

इति समन्वयाधिकरणम् ॥

❀श्रीः ॥ ईक्षतेर्नाऽशब्दम् ॥ श्रीः ॥ १ । १ । ५ ॥

तत्रतावत्प्रधानं वेदान्तप्रतिपादनानर्हमित्याह ॥ प्रत्यक्षमानु-

मानिकं प्रधानं न तत् वेदान्तवेद्यं कुतः, ईक्षतेः "सदेव सौम्ये-दमग्र आसीदेकमेवाद्वितीयम्" इति प्रस्तुतजगत्कारण-व्यापारवाचिनः, ईक्षतेर्धातोः श्रवणात् "तदैक्षत बहु स्याम्" इति ॥ ५ ॥

## श्रीः ॥ गौणश्चेन्नात्मशब्दात् ॥ श्रीः १ । १ । ६ ॥

"तत्तेज ऐक्षत" इत्याद्यचेतनेऽपि वस्तुनि ईक्षतिः श्रूयते तत्र गौणः, एवमत्रापि प्रधान एवेक्षतिर्गौण इति चेन्नैतदुपपद्यते प्रस्तुते सच्छब्दवाच्ये श्रूयमाणचेतनवाचिनः, आत्मशब्दात् "स आत्मा तत्त्वमसि श्वेतकेतो" । [क] इति ह्युत्तरत्र श्रूयते तेजःप्रभृतिष्वपि न गौणमीक्षणं तेजःप्रभृतिशब्दैरपि तत्तच्छरीरकं ब्रह्मैवाऽभिधीयते ॥ अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [ ख ] इति ब्रह्मात्मकजीवाऽनुप्रवेशादेव सर्वस्य वस्तुनो नामरूपभाक्त्वात् "तत्सृष्ट्वा तदेवाऽनुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाऽभवत् निरुक्त-ञ्चाऽनिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाऽविज्ञानञ्च सत्य-ञ्चाऽनृतञ्च सत्यमभवद्" [ ग ] इति ॥ चेतनमचेतनञ्च पृथङ्-निर्दिश्य तदुभयमनुप्रविश्य सत्यच्छब्दवाच्योऽभवदिति हि समा-नप्रकरणे स्पष्ट मभिहितम् ॥ ६ ॥

## श्रीः ॥ तन्निष्ठस्य मोक्षोपदेशात् ॥ श्रीः १ । १ । ७ ॥

इतश्च प्रधानादर्थान्तरभूतम् । सच्छब्दाभिहितं जगत्कारणं सच्छब्दाऽभिहिततत्त्वनिष्ठस्यमोक्षोपदेशात् "तस्य तावदेव चिरं

---

( क ) छा० ६ । ८ । ७ ।

( ख ) छा० ६ । ३ । ७ ।

( ग ) तै० आ० ६ ।

यावन्न विमोक्ष्ये अथ संपत्स्ये" [ क ] इति हि तन्निष्ठस्य मोक्ष उपदिश्यते ॥ प्रधानकारणवादिनामपि हि प्रधाननिष्ठस्य मोक्षोनाऽभिमतः ॥ ७ ॥

## श्रीः ॥ हेयत्वाऽवचनाच्च ॥ श्रीः १ । १ । ८ ॥

यदि प्रधानमत्र विवक्षितं तदा तस्य हेयत्वादध्येयत्वमुच्येत न तदुच्यते मोक्षसाधनतया ध्येयत्वमेवह्यत्रोच्यते "तत्त्वमसि श्वेतकेतो ! इत्यादिना ॥ ८ ॥

## श्रीः ॥ प्रतिज्ञाविरोधात् ॥ श्रीः १ । १ । ९ ॥

इतश्च न प्रधानम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् ॥ सच्छब्दवाच्यतत्त्वज्ञानेन तत्कार्यतया चेतनाऽचेतनसर्ववस्तुज्ञानं "येनाऽश्रुतं श्रुतं भवति" [ क ] इत्यादिना प्रतिज्ञातं तद्धिप्रधान-कारणवादे विरुध्यते चेतनस्य प्रधानकार्यत्वाभावात् प्रधानाद-र्थान्तरभूतब्रह्मकारणवादे चिदचिद्वस्तुशरीरं ब्रह्मैव नामरूप-विभागाऽविभागाभ्यां कार्यं कारणञ्चेति ब्रह्मज्ञानेन कृत्स्नस्य ज्ञाततोपपद्यते ॥ ९ ॥

## श्रीः ॥ स्वाप्ययात् ॥ श्रीः १ । १ । १० ॥

इतश्च न प्रधानं "स्वप्नान्तं मे सौम्य ! विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य ! तदा सम्पन्नो भवति तस्मादेनं स्वपिती-त्याचक्षते स्वंह्यपीतोभवति" [ ख ] इति जीवस्य चेतनस्य सुषु-

---

( क ) छा० ६ । १ । ३ ।
( ख ) छा० ६ । ८ । १ ।

तस्य सता सम्पन्नस्य स्वाप्ययवचनात् प्रधानादर्थान्तरभूतं सच्छब्दवाच्यमिति विज्ञायते स्वमपीतोभवति आत्मानमेवजीवोऽपीतोभवतीत्यर्थः ॥ चिदचिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाऽभिधीयत इति नामरूपव्याकरणश्रुत्युक्तं तज्जीवशब्दाभिधेयं परं ब्रह्मैव सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात्केवलसच्छब्दाभिधेयमिति । सता सौम्य तदा सम्पन्नोभवति स्वमपीतोभवतीत्युच्यते ॥ तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् "प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्" [क] इत्युच्यते। आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः ॥ सुषुप्तिकाले हि नामरूपे विहाय सता परिष्वक्तः पुनरपि जाग्रद्दशायां नामरूपे परिष्वज्य तत्तन्नामरूपोभवतीति श्रुत्यन्तरे स्पष्टमभिधीयते यथा "सुषुप्तः स्वप्नं न कथञ्चन पश्यति" [ख] तथास्मिन् प्राण एवैकधा भवति एतस्माद्वा आत्मनः प्राणायथायथं विप्रतिष्ठन्ते [ ग ] तथा त इह व्याघ्रोवा सिंहोवा वृकोवा यद्यद्भवन्ति तथा भवन्ति [ घ ] ॥ १० ॥

## श्रीः ॥ गतिसामान्यात् ॥ श्रीः १।१।११॥

सकलोपनिषद्गतिसामान्यादप्यस्यामप्युपनिषदि न प्रधानं कारणं विज्ञायते "आत्मा वाइदमेकएवाग्रआसीन्नान्यत् किञ्चनमिषत् सईक्षते लोकान्नुसृजा इति स इमांल्लोकानसृजत [ङ] तस्माद्वा एत-

---

( क ) बृ० ६ । ३ । २१

( ख ) बृ० ६ । ३ । १९ ।

( ग )

( घ ) छा० ६ । ९ । ३

( ङ ) ऐ० १ । १ । १

स्मादात्मन आकाशः सम्भूतः"[क]"स कारणं करणाधिपाधिपो-नचास्य कश्चिज्जनिता न चाधिपः,, इत्यादि सकलोपनिषत्सु सर्वेश्वर एव हि जगत्कारणमिति प्रतिपाद्यते ॥ ११ ॥

श्रीः ॥ श्रुतत्वाच्च ॥ श्रीः १ । १ । १२ ॥

श्रुतमेतस्यामप्युपनिषदि "आत्मनः प्राण आत्मन आकाश [ख] इत्यादावात्मन एव सर्वोत्पत्तिः अतः प्रधानादचेतनादर्थान्तरभूतः सर्वज्ञः पुरुषोत्तम एव जगत्कारणं ब्रह्मेति स्थितम् ॥ १२ ॥

❀श्रीः ॥ आनन्दमयोऽभ्यासात् ॥ श्रीः १।१।१३॥

यद्यपि प्रधानादर्थान्तरभूतस्य प्रत्यगात्मनश्चेतनस्येक्षणयोगः सम्भवति तथापि प्रत्यगात्मा बद्धो मुक्तश्च न जगत्कारणं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत,इत्यारभ्य"तस्माद्वा एतस्माद्विज्ञान-मयादन्योऽन्तर आत्मानन्दमय [ ग ] इत्यस्यानन्दमयत्वप्रतिपादनात् कारणतया व्यपदिष्टोऽयमानन्दमयः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः परमात्मैव । कुतः अभ्यासात् आनन्दमयस्य निरतिशयदशाशि-रस्कानन्दमयत्वेनाऽभ्यासात् "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः[ घ ] यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणोविद्वान्न बिभेति कुतश्चन" [ ङ ] इति वेद्यत्वेनाय-मानन्दमयो ऽनवधिकातिशयोऽभ्यस्यते ॥ १३ ॥

---

( क ) तै० आ० १ ।
( ख ) छा० ७ । १६ । ४ ।
( ग ) तै० आ० ५ ।
( घ ) तै० आ० ८ ।
( ङ ) तै० आ० ६

श्रीः ॥ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥

श्रीः १ । १ । १४ ॥

"स वा एष पुरुषोऽन्नरसमयः" [क] इति विकारार्थमयट् प्रकरणादानन्दमय इत्यस्यापि विकारार्थत्वं प्रतीयते, अतोऽयमानन्दमयो नाऽविकाररूपः परमात्मेतिचेन्न अर्थविरोधात् प्राचुर्यार्थ एवायं मयडिति ज्ञायते "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति ह्यविकार आत्मा प्रकृतः । प्रकरणे च विकारार्थत्वं प्राणमय एव परित्यक्तम् उक्तेन न्यायेनाऽऽनन्दप्राचुर्यादेव परमपुरुष एवानन्दमयः ॥ १४ ॥

श्रीः ॥ तद्धेतुव्यपदेशाच्च ॥ श्रीः १ । १ । १५ ॥

एष एवानन्दयातीति" [ख] इति जीवान् प्रत्यानन्दहेतुरानन्दमयोऽयं व्यपदिश्यते, अतोनानन्दमयः प्रत्यगात्मा ॥ १५ ॥

श्रीः ॥ मान्त्रवर्णिकमेव च गीयते ॥ श्रीः १ । १ । १६

सत्यं ज्ञानमनन्तं ब्रह्म"[क] इति मन्त्रवर्णोदित एव तस्माद्वा एतस्मादित्यादिनानन्दमय इति गीयते अतश्च न प्रत्यगात्मा सः ॥ १६ ॥

श्रीः ॥ नेतरोऽनुपपत्तेः ॥ श्रीः १ । १ । १७ ॥

इतरः प्रत्यगात्मा मन्त्रवर्णोदित इति नाशङ्कनीयं "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" [क] इति प्रत्यगात्मनो बद्धस्य

---

( क ) तै० आ० १ ।

( ख ) तै० आ० ७ ।

मुक्तस्य च ईदृशाविपश्चित्त्वानुपपत्तेः "सोऽकामयत बहुस्यां प्रजायेयेति विचित्रास्थिरत्रसरूपबहुभवनसङ्कल्परूपमिदं विपश्चित्त्वमिति ह्युक्तरत्र व्यज्यते मुक्तस्य सर्वज्ञस्याऽपि जगद्व्यापाराभावादीदृशविपश्चित्त्वाऽसम्भवः ॥ १७ ॥

श्रीः॥भेदव्यपदेशाच्च॥श्रीः १।१।१८ ॥

इतश्च तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय इति विज्ञानमयात् प्रत्यगात्मनो भेदेनायमानन्दमयो व्यपदिश्यते न च विज्ञानमयविषयतयोदाहृते श्लोके "विज्ञानं यज्ञं तनुते" [ क ] इतिव्यपदेशाद्विज्ञानमयो बुद्धिमात्रमित्याशङ्कनीयं यतः सूत्रकार एवेमां शङ्कां परिहरिष्यति ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २ । ३ । ३५ ॥ विज्ञानंयज्ञं तनुते इति यज्ञादिक्रियायां जीवस्य कर्तृत्वव्यपदेशाच्च जीवः कर्त्ता विज्ञानमयशब्देन जीवस्याव्यपदेशे बुद्धिमात्रव्यपदेशे च विज्ञानेनेति निर्देशविपर्ययः स्यात् बुद्धेः करणत्वादित्यर्थः ॥ १८ ॥

श्रीः॥कामाच्च नानुमानापेक्षा॥ श्रीः ।१।१।१६ ॥

इतश्च सोकामयत बहुस्यामिति स्वकामादेवास्य जगत्सर्गः श्रूयते। प्रत्यगात्मनो हि यस्य कस्यचित्सर्गे अनुमानापेक्षा दृश्यते अनुमानगम्यं प्रधानमानुमानम् ॥ १६ ॥

श्रीः॥अस्मिन्नस्य॥तद्योगं शास्ति॥श्रीः १।१।२०

इतश्चास्मिन्नानन्दमये अस्य प्रत्यगात्मनस्तद्योगं शास्ति शास्त्रम "रसो वै सः रसं ह्येवाऽयंलब्ध्वानन्दीभवति [ ख ]

---

( क ) तै० आ० ५।
( ख ) तै० आ० ७।

इत्यतः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः पुरुषोत्तमो जगत्कारणभूत आनन्दमयः ॥ २० ॥

इत्यानन्दमयाधिकरणम् ॥

## ॥श्रीः॥अन्तस्तद्धर्मोपदेशात्॥श्रीः १।१।२१॥

अयं जगत्कारणभूतो विपश्चिदानन्दमयः कश्चिदुपचितपुण्यविशेषो जीवविशेषो देहयोगात् विज्ञायते नायं परमात्मेति न शङ्कनीयम् "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः, [क] इत्यादौ श्रूयमाणः पुरुषाकारः परमात्मैव। कुतः" तद्धर्मोपदेशात् "स एष सर्वेषां लोकानामीशः सर्वेषां कामानाम्" [ख] "तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः" [ग] इति निरुपाधिकसर्वलोकसर्वकामेशत्वं स्वत एवाऽकर्मवश्यत्वञ्च प्रत्यगात्मनोऽर्थान्तरभूतस्य हि परमपुरुषस्यैव धर्मः "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसःपरस्तात्" [घ] इत्यादिषु त्रिगुणात्मकप्रकृत्यनन्तर्गताप्राकृतस्वासाधारणरूपवत्त्वञ्च ज्ञानादिगुणवतस्तस्यैव श्रूयते। ज्ञानादयोऽपि "सत्यं ज्ञान मनन्तं ब्रह्म, 'यः सर्वज्ञःसर्ववित्, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिषु श्रुतत्वात्तस्य गुणा विज्ञायन्ते। अथच 'आदित्यवर्णं तमसः परस्तात्" इत्यादिष्वप्राकृतस्वासाधारणरूपश्रवणात्तद्वत्ता च विज्ञायते। तदेतद्वाक्यकारश्च "हिरण्मयः पुरुषो दृश्यत इति प्राज्ञः सर्वान्तरः स्यात् लोककामेशोपदेशात् तथोदयात्पाप्मनामित्युक्त्वा तद्रूपस्य कार्यत्वं मायामयत्वञ्चेति स्याद् रूपं कृत-

---

( क ) छा० १।६।६।

( ख )

( ग ) छा०।१।६ ७॥

( घ ) पुरुषसूक्ते ।

कमनुग्राहार्थं तच्चेतसामैश्वर्यादिति निरसनीयम्, मतमुपन्यस्य रूपश्चातीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्"[क]इत्याह। व्याख्यातञ्च द्रमिडाचार्यैः नवा मायामात्रमजस्यैव विश्वसृजो रूपम् [ख] न चक्षुषाग्राह्यं मनसा त्वकलमषेण साधनान्तरवता ग्राह्यम्, 'नचक्षुषा गृह्यते नापि वाचा, "मनसा तु विशुद्धेन,,इति श्रुतेः॥ स ह्यरूपाया देवताया रूपमुपदिश्यते। यथाभूतवादि हि शास्त्रं यथा महारजतं वासः "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसःपरस्तात्"इति। प्रकरणान्तरनिर्देशाच्च साक्षिण इति हिरण्मय इति रूपसामान्याद्वा चन्द्रमुखवत्"[ग] इति च वाक्यम्। तच्च व्याख्यातं तैरेव 'न मयडत्र विकारमादाय प्रयुज्यते अनारभ्यत्वादात्मनः,[घ]इत्यादिना अतः प्रत्यगात्मनोऽर्थान्तरभूतो निरुपाधिकविपश्चिदनवधिकातिशयानन्दोऽप्राकृतस्वासाधारणादिव्यरूपः पुरुषोत्तमः परं ब्रह्म जगत्कारणमिति वेदान्तैः प्रतिपाद्यत इति निरवद्यम्॥ २१॥

## श्रीः॥ भेदव्यपदेशाच्चान्यः॥ श्रीः॥ १।१।२२॥

"य आदित्येतिष्ठन्नादित्यान्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति स त आत्मान्तर्याम्यमृत इत्यधिदैवम्, यश्चक्षुषि तिष्ठन् य आत्मनि तिष्ठन्नित्यध्यात्मम्, यः सर्वेषु लोकेषु तिष्ठन्नित्यधिलोकम्, यः सर्वेषु भूतेषु तिष्ठन्नित्यधिभूतम्, यः सर्वेषु वेदेषु तिष्ठन्नित्यधिवेदम्, यः सर्वेषु यज्ञेषु तिष्ठन्नित्यधियज्ञम्" [ङ] इत्यन्तर्यामिब्राह्मणे। सुबालोपनिषदि च

---

( क )

( ख ) द्रमिडाचार्योक्तिः।

( ग )

( घ )

( ङ ) बृ० ५।७। माध्यन्दिनपाठेऽपि

"यः पृथिवीमन्तरे सञ्चरन्नित्यारभ्य योऽव्यक्तमन्तरे सञ्चरन्, योऽक्षरमन्तरे सञ्चरन्, यो मृत्युमन्तरे सञ्चरन्, यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति सर्वदेव सर्वतत्त्व सर्वलोक सर्वभूत सर्ववेद-सर्वयज्ञ सर्वात्मोपरि वर्त्तमानतया तत्तच्छरीरतया तत्तदन्तर्यामितया तत्तद्वेद्यतया तत्तन्नियन्तृतया चैभ्यः सर्वेभ्यो भेदव्यपदेशाच्चाऽयमपहतपाप्मा नारायणः प्रधानात्प्रत्यगात्मनश्चार्थान्तरभूतोऽनिखिल जगदेककारणमिति सिद्धम् ॥ २२ ॥

इत्यन्तराधिकरणम् ॥

❀श्रीः ॥ आकाशस्तल्लिङ्गात् ॥ श्रीः १।१।२३ ॥

❀श्रीः ॥ अत एव प्राणः ॥ श्रीः १ । १ । २४ ॥

आकाश एव प्राणः * "सर्वाणि ह वा इमानि भूतान्याकाशादुत्पद्यन्ते आकाशं प्रत्यस्तंयन्ति" [क] "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" [ख] इत्यादौ "सदेव सोम्येदमग्र आसीद्" इत्यादिना सामान्येन निर्दिष्टस्य जगत्कारणस्य भूताकाशप्राणसहचारिजीववाचिशब्दाभ्यां विशेषनिर्णयशङ्कायां सर्वाणि ह वा इमानीति प्रसिद्धवन्निर्दिश्यमानाज्जगत्कारणत्वादिलिङ्गाद्भूताकाशजीवाभ्यामर्थान्तरभूतः परमपुरुष एवाऽत्राऽऽकाशप्राणशब्दनिर्दिष्ट इति निश्चीयते । तत्प्रसिद्धेस्तु बहुभवनरूपेक्षणाऽनवधिकातिशयानन्दजीवानन्दहेतुत्व-विज्ञानमयविलक्षणत्व-निखिलभुवनभयाभयहेतुत्व-सर्वलोकसर्वकामेशत्व-सर्वपाप्मोदयाऽप्राकृतस्वाऽसाधारणरूपविशिष्टस्य रविकरविकसितपुण्डरीकनयनस्य सर्व-

* प्राणइत्यन्तःपाठोनमुद्रिताम्धाक्षरपुस्तकेऽस्ति ।

(क) छा० १।९।१।

(ख) छा० १।११।५।

श्रस्य सत्यसङ्कल्पस्य करणाधिपाधिपस्य परमपुरुषस्यैव निखिलजगदेककारणत्वादिति स एवाऽऽकाशप्राणशब्दाभ्यां जगत्कारणत्वेनाभिधीयत इति निश्चयो युक्त एव ॥ २३ ॥ २४ ॥

इति, आकाशाधिकरणप्राणाधिकरणे ॥

❀श्रीः॥ ज्योतिश्चरणाऽभिधानात् ॥ श्रीः १।१।२५॥

"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" (क) इत्यत्र सर्वस्मात् परत्वेन निर्दिश्यमानतया सकलकारणभूतज्योतिषः कौक्षेयज्योतिषैक्याभिधानात् स्ववाक्ये विरोधिलिङ्गादर्शनाच्च प्रसिद्धमेवज्योतिर्जगत्कारणत्वेन प्रतिपाद्यत इति शङ्कायां यद्यपि स्ववाक्ये विरोधिलिङ्गं न दृश्यते तथापि पूर्वस्मिन् वाक्ये "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" (ख) इति प्रतिपादितस्य सर्वभूतचरणस्य परमपुरुषस्यैव द्युसम्बन्धितयाऽत्राऽपि प्रत्यभिज्ञानात् स एव ज्योतिश्शब्देन सर्वस्मात्परत्वेन सकलकारणतयाऽभिधीयते । अस्य च कौक्षेयज्योतिषैक्याभिधानं फलायोपदिश्यत इति न कश्चिद्विरोधः । अखिलजगदेककारणभूतः परमपुरुषोऽप्राकृतस्वासाधारणादिव्यवर्णादिव्यरूपस्तमसःपरस्तात् वर्त्तत इति तस्यैव निरतिशयदीप्तियोगात् ज्योतिश्शब्दाभिधेयत्वम् । विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु वासश्च युज्यत एव ॥ २५ ॥

श्रीः॥ छन्दोऽभिधानान्नेति चेन्न तथाचेतोऽर्पण निगमात्तथाहि दर्शनम्॥ श्रीः १।१।२६॥

---

(क) छा० ३।१३।७।
(ख) छा० ३।१२।६।

पूर्वत्र "गायत्री वा इदं सर्वम्" (क) इति गायत्र्याख्यछन्दः प्रस्तुतमिति नात्र परमपुरुषाभिधानमिति चेत्, नैतत्। परमपुरुषस्यैव गायत्रीसादृश्यानुसन्धानोपदेशात्तस्य छन्दोमात्रस्य सर्वभूतात्मकत्वानुपपत्तेरेवेति निगम्यते अन्यत्रापिह्यन्यस्य छन्दससादृश्याच्छन्दोनिर्देशो दृश्यते "ते वा एते पञ्चान्ये" इत्यारभ्य सैषाविराट्,, [ख] इत्यादौ ॥ २६ ॥

श्रीः॥भूतादिपादव्यपदेशोपपत्तेश्चैवम्॥श्रीः १।१।२७॥

भूतपृथवीशरीरहृदयैश्चतुष्पदेति व्यपदेशश्च परमपुरुषे गायत्री शब्दनिर्दिष्टे ह्युपपद्यत इति पूर्वोक्तप्रकार एव समञ्जसः ॥ २७ ॥

श्रीः ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्॥ श्रीः १।१।२८ ॥

पूर्वत्र "त्रिपादस्यामृतं दिवि,, इति परमपुरुषो व्यपदिश्यते। अत्र "अथ यदतः परो दिवः" इति पञ्चम्या निर्दिष्टद्युसम्बन्धि ज्योतिरिति न प्रत्यभिज्ञेति चेन्न तदुभयस्मिन्नपि व्यपदेशे विरोधाभावात्। यथा वृक्षाग्रे श्येनो वृक्षाऽग्रात्परतः श्येन इति व्यपदेशः, अत्र दिवः परत्वमेवोभयत्र विवक्षितमित्यर्थः ॥ २८ ॥

इति जोतिरधिकरणम् ॥

❀श्रीः ॥ प्राणस्तथानुगमात् ॥ श्रीः १।१।२९ ॥

आत्मनां हिततमरूपमोक्षसाधनोपासनकर्मतयाप्रज्ञातजीवभावस्येन्द्रस्य "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व,,

---

( क ) छा० ३।१२।१।
( ख ) छा० ४।३।८।

(क) इति विधानात्स एव जगत्कारणम् ॥ कारणोपासनं हि मोक्षसाधनम् ॥ तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये "इति श्रुतेः। इति नाशङ्कनीयं प्राणशब्दसमानाधिकरणेन्द्रशब्दनिर्दिष्टो जीवादर्थान्तरभूत उक्तलक्षणः परमात्मैव । कुतः तथानुगमात् परमात्मा साधारणानन्दाजरामृतादित्वस्येन्द्रप्राणनिर्दिष्टस्यानुगमो हि दृश्यते "स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृत" ( क ) इति ॥ २९ ॥

## श्रीः ॥ नवक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ श्रीः १ । १ । ३० ॥

उपक्रमेहि "मामेव विजानीहि,, ( क ) इति त्वाष्ट्रवधादिना प्रज्ञातजीवभावस्येन्द्रस्योपदेशादुपसंहारस्तदनुगुणो वर्णनीय इति चेत् नैतत् अध्यात्मसम्बन्धभूमाह्यस्मिन् अध्यात्मम् परमात्मधर्मः परमात्मसम्बन्धबहुत्वमस्मिन्निन्द्रप्राणशब्दाभिधेये वाक्योप्रक्रमप्रभृत्युपसंहारात् दृश्यते "यं त्वम् मनुष्यायहिततमं मन्यसे,, ( क ) इति। हिततमोपासनं प्रारब्धं तच्च परमात्मधर्मः" तमेवं विद्वानमृत इह भवति नान्यः पन्थाः,, ( ख ) इत्यादिश्रुतेः ॥ तथाहि एष एव साधु कर्म कारयति,, ( ग ) इत्यादिना सर्वस्य कारयितृत्वम् "एवमेवैता भूतमात्रा" इत्यारभ्य प्रज्ञामात्राः प्राणेष्वर्पिताः" ( ग ) इति सर्वाधारत्वं तथानन्दादयश्च एष लोकाधिपतिः" (ग) इत्यादिना सर्वेश्वरत्वञ्च ॥ ३० ॥

---

( क ) कौषीतक्युपनिषदि ३ । अ० । १ ।

( ख ) पु० सू० ।

( ग ) कौ० ३ । अ० । ८ ।

श्रीः ॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ श्रीः

१ । १ । ३१ ॥

नामरूपव्याकरणादि शास्त्रात् सर्वैः शब्दैः परमात्मैवाभिधी-यते इति दृष्ट्या तदुज्ञापनायाऽयमिन्द्रादिशब्देन परमात्मोपदेशः शास्त्रस्था हि वामदेवादयस्तथैव वदन्ति" तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" (क) इति ॥ ३१ ॥

श्रीः ॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रै-विध्यादाश्रितत्वादिह तद्योगात् ॥ श्रीः १ ।१। ३२ ।

"त्रिशीर्षाणं त्वाष्ट्रमहनं यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः,, (ख) इत्यादि जीवलिङ्गं मुख्यप्राणलिङ्गञ्चास्मिन् दृश्यते इति नैवमिति चेन्न उपासात्रैविध्याद्धेतोर्जीवशब्देन प्राणश-ब्देन च परमात्मनोऽभिधानम् अन्यत्रापि परमात्मनः स्वरूपेणोपा-सनं भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेन इति त्रिविधं हि परमात्मोपासनमाश्रितम् यथा "सत्यं ज्ञानमनन्तं ब्रह्म,, इति स्वरूपेण "तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादि "सत्यं चानृतञ्च सत्यमभवत्" इति भोक्तृशरीरकत्वेन भोग्यभो-गोपकरणशरीरकत्वेन चेहापि तत्सम्भवादेवमुपदेशः 'जन्माद्यस्य-यतः' १ । १ । २ इत्यादिषु सद्ब्रह्मात्मेति सामान्यशब्दैर्जगत्कारणं

---

( क ) बृ० ३ । ४ । १० ।

( ख ) कौ० । ३ । आ० । १ ।

( ग ) तै० भृ० ६ ।

( घ ) छा० ३ । १४ । ४ ।

प्रकृतिपुरुषाभ्यामर्थान्तरभूतमिति साधितम् ॥ ज्योतिश्चरणाभिधानात् ॥ १ । १ । २५ ॥ इत्यस्मिन्सूत्रे पुरुषसूक्तोदितो महापुरुषो जगत्कारणमिति विशेषतो निर्णीतम् । स एव प्रज्ञातजीवबाचिभिरिन्द्रादिशब्दैरपि क्वचित् कचिच्छास्त्रदृष्ट्या तत्तच्छरीरकतया चोपास्यत्वायोपदिश्यत इति ॥ शास्त्रदृष्ट्यानूपदेशो वामदेववत् ॥ १ । १ । ३१ ॥ इति । उपासात्रैविध्यात् इति साधितम् ॥ ३२ ॥ इतीन्द्रप्राणाधिकरणम् ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति वेदान्तसारे प्रथमाध्यायस्य प्रथमः पादः १ ॥



पादेऽस्मिन् सूत्रसङ्ख्या द्वात्रिंशत् ॥ ३२ ॥

अधिकरणसङ्ख्याचैकादश ॥ ११ ॥

हरिः ओ३म् तत्सत्



श्रीमते हयग्रीवाय नमः ॥

प्रथमाध्याये द्वितीयपादाऽऽरम्भः ॥

---

❀श्रीः ॥ सर्वत्र प्रसिद्धोपदेशात् ॥ श्रीः १।२।१॥

"सर्वं खल्विदं ब्रह्म" (क) इति निर्दिष्टेन समानाधिकरण्येन निर्दिष्टं ब्रह्म परमात्मा कुतः, प्रसिद्धोपदेशात् "तज्जलान्" ( ख ) इति हेतुतः सर्वात्मकत्वोपदेशादित्यर्थः। प्रसिद्धं हि हेतुतया व्यपदिश्यते सकलोपनिषत्सु ब्रह्मैव हि जगज्जनिलय जीवन हेतुतया प्रसिद्धं यतो वा इमानीत्यादिषु ॥ १ ॥

श्रीः ॥ विवक्षितगुणोपपत्तेश्च ॥ श्रीः १।२।२।

मनोमयत्व सत्यसङ्कल्पत्वादयो विवक्षितगुणाः ब्रह्मण्येवोपपद्यन्ते ॥ २ ॥

श्रीः॥ अनुपपत्तेस्तु न शारीरः ॥ श्रीः १।२।३॥

दुःखमिश्रपरिमितसुखलवभागिनि शारीरे त्वेषां गुणानामनुपपत्तेर्न शारीरोऽयम् ॥ ३ ॥

श्रीः ॥ कर्मकर्तृव्यपदेशाच्च ॥ श्रीः १।२।४।

"एतमितः प्रेत्याभिसम्भवितास्मि" ( ग ) इत्यभिसम्भाव्याभिसम्भवितृत्वेन प्रस्तुतब्रह्मजीवयोर्व्यपदेशात् अभिसम्भाव्यं ब्रह्म जीवादर्थान्तरम् ॥ ४ ॥

---

( क ) तै० भृ० ६।

( ख ) छा० ३।१४।१।

( ग ) छा० ३।१४।४।

श्रीः ॥ शब्दविशेषात् ॥ श्रीः १ । २ । ५ ॥

"एष मे आत्मान्तर्हृदयः"(क) इति षष्ठ्या प्रथमया च जीवो ब्रह्म च व्यपदिश्यते ततश्चार्थान्तरम् ॥ ५ ॥

श्रीः ॥ स्मृतेश्च ॥ श्रीः १ । २ । ६ ॥

अत्रापि प्रथमया निर्दिष्टः पुरुषोत्तम इति निश्चीयते " सर्वस्य चाहं हृदि सन्निविष्टः " (ख) इति हि स्मृतिः ? ॥ ६ ॥

श्रीः॥अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥श्रीः १ । २ । ७ ॥

"एष मे आत्मान्तर्हृदये अणीयान् व्रीहेः(क) इत्यादिनाऽल्पायतनत्वात् स्वरूपाल्पत्वव्यपदेशाच्च नायं पर इति चेन्न-उपास्यत्वाद्धेतोस्तथा व्यपदेशो न स्वरूपाल्पत्वेन व्योमवत् स्वरूपमहत्त्वञ्चात्रैव व्यपदिश्यते"ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्,, ( क ) इत्यादिना ॥ ७ ॥

श्रीः ॥ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ श्रीः १ । २ । ८ ॥

परोऽप्यन्तश्शरीरे वसति चेत् जीववत् सुखदुःखभोगप्राप्तिः स्यादिति चेन्न हेतुवैशेष्यात् परस्य हि छन्दतो जीवरक्षार्थं शरीरान्तर्वासः ॥ ८ ॥ इति सर्वत्रप्रसिद्ध्यधिकरणम्

---

( क ) छा० ३ । १४ । ३ ।

( ख ) छा० गी० १५ । १५ ।

**श्रीः॥ अत्ता चराचरग्रहणात् ॥ श्रीः १ । २ । ९ ॥**

"यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः,, (क) इत्यत्रौदनोपसेचनसूचितोऽत्ता परः पुरुषः ब्रह्मक्षत्रोपलक्षितस्य चराचरस्य कृत्स्नस्य मृत्यूपसेचनत्वेनादनीयतया ग्रहणात् ॥ ९ ॥

**श्रीः ॥ प्रकरणाच्च ॥ श्रीः १ । २ । १० ॥**

"महान्तं विभुमात्मानं मत्वा धीरो न शोचति नायमात्मा-प्रवचनेन लभ्यः ( ख ) इत्यादिना परस्यैव प्रकृतत्वात् सएवाऽयम् ॥ १० ॥

**श्रीः ॥ गुहाम्प्रविष्टावात्मानौ हि तद्दर्शनात्॥**

**श्रीः १ । २ । ११ ॥**

अनन्तरम् "ऋतम्पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये,, (ग) इत्यादिना जीवपरमात्मानावेव प्रयोज्यप्रयोजकभावेन कर्मफलाशनेऽन्वयादुपदिष्टौ तयोरेवाऽस्मिन्प्रकरणे गुहाप्रवेश-दर्शनात् "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्" (घ) इति परस्य "या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती,, (ङ) इति जीवस्य कर्मफलादनाददितिर्जीवः ॥ ११ ॥

**श्रीः॥ विशेषणाच्च॥श्रीः १ । २ । १२ ॥**

जीवपरावेव हि सर्वत्रास्मिन् प्रकरणे विशेष्येते "न जायते

---

( क ) कठोपनिषदि २।२५।
( ख ) क० २ । २२ ।
( ग ) क० ३ । १ ।
( घ ) क० २ । २ । १२
( ङ ) क० २ । ४ । ७

म्रियते वा विपश्चित्" (क) इत्यादौ जीवः "अणोरणीया-न्महतोमहीयान्" (ख) "महान्तं विभुमात्मानम्, नायमात्मा प्रवचनेन लभ्यः" "विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः॥ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (ग) इत्यादिषु परः "त्रिपादस्यामृतं दिवि, । 'अथयदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इति ॥ विश्वतः प्राकृतस्थानात् परं विष्णोः परस्थानमेव हि संसाराध्वनः पार-भूतं मुमुक्षुभिः प्राप्यम् "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, (घ) "तदक्षरे परमे व्योमन्" (ङ) "क्षयं तमसस्परजसः पराके" (च),, "विश्वं पुराणं तमसः परस्तात्, (छ) "तेहनाकं महिमानः सचन्ते यत्र पूर्वे साध्याः" (ज) इत्यादि सकलोपनिषत्सु प्रसिद्धम् ॥ १२ ॥ इत्यत्त्रधिकरणम्

## श्रीः॥ अन्तर उपपत्तेः ॥श्रीः १ । २ । १३॥

"य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्म" (झ) इत्यत्र अक्ष्याधारः परमपुरुषः निरुपाधिकामृत्वाभयत्वसंयद्वामत्वादीनामस्मिन्नेवोपपत्तेः ॥ १३ ॥

## श्रीः ॥ स्थानादिव्यपदेशाच्च ॥ श्रीः १ । २ । १४॥

"यश्चक्षुषि तिष्ठन्" (ञ) इत्यादिना स्थितिनियमनादिव्यप-देशाच्चायम् परः ॥ १४ ॥

---

(क) क० २ । २ । १८
(ख) क० २ । २ । २०
(ग) क० २ । ३ । ९
(घ) पु० सू
(ङ) तै० ना० ६ ।२ ।
(च) का० २ प्र० ६
(छ) तै० ना० ६ । ५
(ज) पु० सू० ।
(झ) छा० ४ । १५ । १ ।
(ञ) बृ० ५ । ७ । १८

श्रीः ॥ सुखविशिष्टाभिधानादेव च ॥ श्रीः
१ । २ । १५ ॥

"कं ब्रह्म खं ब्रह्म" ( क ) इति पूर्वऽमाख्यैव सुखविशिष्टतया ऽभिधानाच्चायं परः ॥ १५ ॥

श्रीः ॥ अत एव च स ब्रह्म ॥ श्रीः १।२।१६ ॥

यतस्तत्र भवभीतायोपकोशलाय ब्रह्मजिज्ञासवे "कं ब्रह्म खं ब्रह्म" इत्युपदिष्टः "यद्वाव कं तदेव खम्" ( क ) इति सुखरूपः अतः सुखशब्दाभिधेय आकाशः परमेव ब्रह्म ॥१६ ॥

श्रीः॥श्रुतोपनिषत्कगत्यभिधानाच्च॥ श्रीः१।२।१७ ॥

श्रुतब्रह्मस्वरूपाणामधिगन्तव्यायास्त्वर्चिरादिगतेरक्षिपुरुषं श्रुतवते "तेऽर्च्चिषमेवाभिसम्भवन्ति" (ख) इत्यादिनाभिधानाच्चायं परमपुरुषः ॥ १७ ॥

श्रीः ॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ श्रीः
१ । २ । १८ ॥

परस्मादितरो जीवादिर्नाक्ष्याधारः चक्षुषि नियमेन अवस्थितेः अमृतत्वाद्यसम्भवाच्च ॥ १८ ॥ इत्यन्तराधिकरणम्

❀श्रीः ॥ अन्तर्य्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ श्रीः १ । २ । १९ ॥

यः पृथिव्यान्तिष्ठन्" [ग] इत्यादिष्वधिदैवाऽधिलोकादिपदचिह्नितेषु

---

( क ) छा० ४ । १० । ५ ।
( ख ) छा० ४ । १५ । ५ ।
( ग ) बृ० ५ । ७ । ३ ।

वाक्येषु श्रूयमाणोऽन्तर्यामी परमपुरुषः सर्वान्तरत्व-सर्वाविदितत्व-सर्वशरीरकत्व-सर्वनियन्तृत्वादिपरमात्मधर्मव्यपदेशात् ॥ १९ ॥

## श्रीः ॥ न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च ॥ श्रीः ॥

१ । २ । २० ॥

नाऽयम् प्रधानं जीवश्च तयोरसम्भावितसर्वाऽविदितत्वादि-धर्माभिलापात् असम्भावनया यथा न स्मार्त्तं तथा जीवोऽपीत्यर्थः ॥ २० ॥

## श्रीः ॥ उभयेऽपि हि भेदेनैनमधीयते ॥ श्रीः

१ । २ । २१ ॥

उभये काण्वा माध्यन्दिनाश्च "यो विज्ञानेतिष्ठन्" (क) "य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद । यस्यात्माशरीरं य आत्मानमन्तरो यमयति" (ख) इति प्रत्यगात्मनो भेदेनैनम् अन्तर्यामिणमधीयते अतः पर एवाऽयम् ॥ २१ ॥

## ❀श्रीः ॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ ॥श्रीः

१ । २ । २२ । ॥

"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्,, इत्यारभ्य "यद्भूतयोनिं परिपश्यन्ति धीराः" (ग) " अक्षरात्परतः परः" [घ] इत्यादौ प्रधानात् प्रत्यगात्मनश्चार्थान्तरभूतोऽदृश्यत्वादिगुणकः परमात्मा प्रतिपाद्यते "यः सर्वज्ञः सर्ववित्,, इत्यादिधर्मोक्तेः ॥ २२ ॥

---

( क ) बृ० ५ । ७ । २२
( ख ) माध्यन्दिनपाठे
( ग ) मु० १ । १ । ६
( घ ) मु० २ । १ । २ ।

श्रीः।। विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ।।

श्रीः १। १। २३ ॥

एकविज्ञानेन सर्वविज्ञानरूपविशेषणाव्यपदेशान्न प्रधानम् "अक्षरात्परतः परः" इति प्रधानात्परतः प्रत्यगात्मनोऽपि पर इति भेदव्यपदेशान्न प्रत्यगात्मा च। अथवा सामानाधिकरण्येन परतोऽक्षरात्पञ्चविंशकात्पर इति भेदव्यपदेशः ॥ २३ ॥

श्रीः।। रूपोपन्यासाच्च।। श्रीः १।२ ।। २४ ।।

"अग्निर्मूर्द्धा" (क) इत्यादिना त्रैलोक्यशरीरोपन्यासाच्च परमात्मा ।। २४ ।। इत्यदृश्यत्वाधिकरणम्

❀श्रीः ।। वैश्वानरःसाधारणशब्दविशेषात् ।।

श्रीः ।। १। २। २५ ।।

"आत्मानमेवेमं वैश्वानरम्,, (ख) इत्यादौ वैश्वानरः परमात्मा जाठराग्न्यादिषु साधारणस्यापि वैश्वानरशब्दस्यास्मिन् प्रकरणे परमात्माऽसाधारणैः सर्वात्मकत्वब्रह्मशब्दादिभिर्विशेष्यमाणत्वात् ॥ २५ ॥

श्रीः ।। स्मर्यमाणमनुमानं स्यादिति ।। श्रीः

१। २। २६।

द्युलोकादिपृथिव्यन्तं रूपम् अग्निर्मूर्द्धेत्यादिषूक्तम् अत्र प्रत्यभिज्ञायमानस्य परमात्मत्वे अनुमानं लिङ्गमित्यर्थः ।। २६ ।।

---

(क) मु० २।१।४

(ख) छा० ५।११।६

श्रीः॥शब्दादिभ्योन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ श्रीः १।२।२७।

"स एषोऽग्निर्वैश्वानरः" (क) इत्यग्निशब्दसामानाधिकरण्यात् प्राणाहुत्याधारत्वादिभिः "पुरुषेन्तःप्रतिष्ठितम्" ( ख ) इत्यादेश्च नायं परमात्मेति चेत् । नैतत् । जाठराग्निशरीरत्वेनोपास्यत्वोपदेशात् केवलजाठराग्नेस्त्रैलोक्यशरीरकत्वाद्यसम्भावाच्च "स एषोऽग्निर्वैश्वानरो यत्पुरुषः" [ग] इत्येनं वैश्वानरं पुरुषमप्यधीयते वाजिनः । निरुपाधिकपुरुषशब्दश्च परमात्मनि नारायण एव "सहस्रशीर्षं देवम्" इत्यारभ्य "विश्वमेवेदं पुरुषः" [घ] इत्यादिषु प्रसिद्धः । २७ ॥

श्रीः॥अत एव न देवताभूतं च ॥ श्रीः१।२।२८।

यतोऽयं वैश्वानरस्त्रैलोक्यशरीरः पुरुषशब्दनिर्दिष्टश्च ततोयं नाग्न्याख्यदेवता तृतीयमहाभूतश्च ॥ २८ ॥

श्रीः॥ साक्षादप्यविरोधं जैमिनिः॥श्रीः१।२।२९।

नावश्यमग्निशरीरकत्वेनोपास्यत्वायेदमग्निशब्दसामानाधिकरण्यम् अग्रनयनादियोगेन परमात्मन्येवाग्निशब्दस्य साक्षाद्वृत्तेः सामानाधिकरण्याविरोधं जैमिनिराचार्यो मन्यते ॥ २९ ॥

---

( क )
( ख )
( ग )
( घ ) तै० ना० ६।११

श्रीः॥अभिव्यक्तेरित्याश्मरथ्यः॥श्रीः १ । २ । ३०।

"यस्त्वेतमेवं प्रादेशमात्रम्" (क) इत्यनवच्छिन्नस्य द्युप्रभृति-परिच्छिन्नत्वम् उपासकाभिव्यक्त्यर्थमिति आश्मरथ्यः ॥ ३० ॥

श्रीः॥ अनुस्मृतेर्बादरिः ॥ श्रीः १।२।३१॥

द्युप्रभृतिपृथिव्यन्तानाम् मूर्द्धादिपादान्तावयवत्वकल्पनं तथाऽनुस्मृत्यर्थम् ब्रह्मप्रतिपत्तय इति बादरिः ॥ ३१ ॥

श्रीः॥ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति॥

श्रीः १ । २ । ३२ ॥

"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" (क) इत्यादिनोपासकहृदयादीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनार्थमिति जैमिनिः । दर्शयति च श्रुतिः "य एवं विद्वानग्निहोत्रं जुहोति,, ( ख ) इति एते पक्षाः स्वीकृताः पूजार्थमाचार्यग्रहणम् ॥ ३२ ॥

श्रीः॥ आमनन्तिचैनमस्मिन् ॥ श्रीः १।२।३३ ॥

एनं परमात्मानम् अस्मिन् उपासितृशरीरे प्राणाहुतिवेलायाम्

---

( क ) छा० ५ । १८ । १
( ख ) छा० ५ । १८ । २

मनुसन्धानार्थम् "तस्य ह वा एतस्य-मूर्द्धैव सुतेजाः, (क) इति आमनन्ति च उपासकस्य मूर्द्धादिरेवास्य परमात्मनो मूर्द्धादिरित्यर्थः ॥ ३३ ॥

इतीन्द्रप्राणाधिकरणम् ।

इति श्रीमद्भगवद्रामानुजाचार्य्यविरचिते श्रीमति वेदान्तसारे प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

पादेऽस्मिन् सूत्राणि त्रयस्त्रिंशत् ॥ ३३ ॥
अधिकरणानि च षट् ॥ ६ ॥

## शृणुत मनाक् ।

निराऽऽलोके लोके निरवधिपरस्नेहभरितो—
यतिक्ष्माभृद्दीपो यदि न खलु जाज्वल्यत इह ॥
अहङ्कारध्वान्तं विजहतु कथङ्कार मनवाः !
कुतर्कंव्यालौघं कुमतिमतपातालकुहरम् ॥

---

(क) ५।१८।२

श्रियै नमः ॥

प्रथमाध्याये तृतीयपादारम्भः ॥

## ❀श्रीः॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ श्रीः १।३।१ ॥

"यस्मिन् द्यौः पृथिवीचान्तरिक्षम्,, (क) इत्यादौ द्युपृथिव्यादीनामायतनम् आधारः परमपुरुषः "तमेवैकं जानथात्मानम्,,(क) इत्यात्मशब्दान्निरुपाधिकात्मत्वं हि परमपुरुषस्यैव "अमृतस्यैष सेतुः ,, (क) इति तदेव द्रढयति "बहुधा जायमानः,, (ख) इति परत्वं न निवारयति "अजायमानो बहुधा विजायते,, (ग) इति कर्मभिरजायमानस्यैवाश्रितवात्सल्याच्छन्दतो जननं तस्य हि श्रूयते ॥ १ ॥

## श्रीः॥ मुक्तोपसृप्यव्यपदेशाच्च॥श्रीः १।३।२॥

"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" (घ) "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्,, (ङ) इति च पुण्यपापनामरूपविनिर्मुक्तानां प्राप्यतया व्यपदेशाच्चाऽयम् परः ॥ २ ॥

## श्रीः॥ नानुमानमतच्छब्दात् प्राणभृच्च ॥श्रीः१।३।३॥

यथा न प्रधानमतच्छब्दात् तथा न प्राणभृदपीत्यर्थः ॥ ३ ॥

## श्रीः॥ भेदव्यपदेशाच्च ॥ श्रीः१।३।४॥

"अनीशया शोचति मुह्यमानः जुष्टं यदापश्यत्यन्यमीशम्,,(च) इत्यादिना प्रत्यगात्मनो भेदेन व्यपदेशाच्चायं परः ॥ ४ ॥

---

(क) मु० २।२।५
(ख) मु २।२।६
(ग) पु० सू० २१।
(घ) मु० ३।१।३
(ङ) मु०।३।२।८
(च) मु० ३।१।२

श्रीः ॥ प्रकरणात् ॥ श्रीः १।३। ५ ॥

"अथ परा यया तदक्षरमधिगम्यते,,(क)इत्यादि परस्य हीदम प्रकरणम् ॥ ५ ॥

श्रीः॥ स्थित्यदनाभ्यांश्च॥ श्रीः१।३।६॥

"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति,, इति जीवस्य कर्मफलादनमभिधायाऽनश्नतो दीप्यमानस्य स्थित्यभिधानाच्चायं परमात्मा ॥ ६ ॥ इतिद्युभ्वाद्यधिकरणम्

❀श्रीः॥ भूमासम्प्रसादादध्युपदेशात्॥ श्रीः १।३।७॥

"सुखन्त्वेव विजिज्ञासितव्यम,, (ख)"भूमैवसुखम्" (ग) इत्युक्त्वा भूम्नः स्वरूपमाह " यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा,, (घ) इति यस्मिन् सुखेऽनुभूयमाने तद्व्यतिरिक्तं किमपि सुखत्वेन न पश्यति न शृणोति न विजानाति स भूमेत्युच्यते"अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम,,(घ) इति वचनात् । तथा च महाभारते "दिव्यानि कामचारीणि विमानानि सभास्तथा। आक्रीडा विविधा राजन् ! पद्मिन्यश्चामलोदकाः। एते वै निरयास्तात ! स्थानस्य परमात्मनः,, इति "एष तु वा अतिवदति यः सत्येनातिवदति" ( ङ ) इति प्रस्तुतस्यातिवादित्वमेव सगङ्गतम् । अतिवादित्वं हि स्वोपास्यपुरुषार्थाधिक्यवादित्वम,तदल्पमित्यल्पप्रतियोगित्वेन भूमाइत्युक्तप्रकारवैपुल्याश्रय-

---

( क ) मु० । १ । १ । ५
( ख ) छा० । ७ । २२
( ग ) छा० । ७ । २३
( घ ) छा० ७ । २४
( ङ ) छा० ७ । १६

सुखरूपवाची अयं भूमशब्दव्यपदिष्टः परमात्मा । सम्प्रसादाद-ध्युपदेशात्, सम्प्रसादः प्रत्यगात्मा "अथ य एष सम्प्रसादः" ( क ) इति श्रुतेः । एष तु वा अतिवदति यः सत्येन' इत्यादिना प्राणशब्द-निर्दिष्टात् प्रत्यगात्मन ऊर्द्ध्वमर्थान्तरत्वेनाऽस्योपदेशात् ॥ ७ ॥

श्रीः ॥ धर्मोऽपपत्तेश्च ॥ श्रीः ॥ १ । ३ । ८ ॥

"स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि" (ख) इत्यादौ व्यप-दिष्टानां स्वमहिमप्रतिष्ठितत्व सर्वकारणत्व सर्वात्मकत्वादिधर्माणां-परस्मिन्नेवोपपत्तेश्च भूमा परः ॥ ८ ॥ इतिभूमाधिकरणम्

❁श्रीः ॥ अक्षरमम्बरान्तधृतेः ॥ श्रीः १।३।९ ॥

" एतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्त्यस्थूलमनणु" (ग) इत्यादिनाऽभिहितम् अक्षरं परं ब्रह्म अम्बरान्तधृतेः "यदूर्द्ध्वं गार्गि ! दिवः" इत्यारभ्य सर्वविकाराधारतया निर्दिष्ट आकाशः "कस्मिन्नोतश्च प्रोतश्च" (घ) इति पृष्टे "एतद्वै तदक्षरम्" (ग) इति निर्दिष्टस्याक्षरस्य वायुमदम्बरान्तधृतेः सर्वविकाराधारोव्य-यमाकाशो वायुमदम्बरान्तकारणं प्रधानं तद्धारकं परं ब्रह्म ॥ ९ ।

श्रीः ॥ सा च प्रशासनात् ॥ श्रीः १ । ३ । १० ॥

सा च धृतिः "एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्या-चन्द्रमसौ विधृतौ तिष्ठतः" (ङ) इत्यादिना प्रकृष्टाज्ञा क्रियमाणा श्रूयते अत इदमक्षरं प्रत्यगात्मा च न भवतीत्यर्थः ॥ १० ॥

---

( क ) छा० ८ । ३ । ४
( ख ) छा० ७ । २४
[ ग ] बृ० ५ । ८ । ८
[ घ ] बृ० ५ । ८ । ७
[ ङ ] बृ० ५ । ८ । ९

श्रीः ॥ अन्यभावव्यावृत्तेश्च ॥ श्रीः १ । ३ । ११ ॥

अन्यभावोऽन्यत्वम् "अदृष्टं द्रष्टृ" (क) इत्यादिना परमात्मनोऽन्यत्वं ह्यस्याक्षरस्य व्यावर्त्तयति वाक्यशेषः अतश्च पर एव ॥ ११ ॥ इत्यक्षराधिकरणम्

❀श्रीः ॥ ईक्षतिकर्मव्यपदेशात्सः ॥ श्रीः १ । ३ । १२ ॥

"यः पुनरेतं त्रिमात्रेणोमित्येनेनैवाक्षरेण परमपुरुषमभिध्यायीत" इत्यारभ्य "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" (ख) इत्यत्र ध्यायतिपूर्वकेक्षतिकर्म सः प्रशासिता परमात्मेत्यर्थः उत्तरत्र "तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्च" (ग) इति परमपुरुषासाधारणधर्मव्यपदेशात् "यत्तत्कवयो वेदयन्ते ,, (ग) इति तदीयस्थानस्य सूरिभिर्दृश्यत्वव्यपदेशाच्च ॥ १२ ॥ इतीक्षतिकर्म्माधिकरणम्

❀श्रीः ॥ दहर उत्तरेभ्यः ॥ श्रीः १ । ३ । १३ ॥

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" (घ) इत्यत्र 'दहराकाशशब्दनिर्दिष्टः परमात्मा' उत्तरेभ्यो वाक्यगतेभ्यः तदसाधारणधर्मेभ्यः उत्तरत्र दहराकाशस्य सर्वाधारतयाऽतिमहत्त्वमभिधाय 'एतत्सत्यं ब्रह्माख्यं पुरम्' इति निर्दिश्य तस्मिन् ब्रह्माख्यपुरे दहराकाशे "तस्मिन् कामाः समाहिताः" इत्युक्तः

---

[ क ] बृ० ५ । ८ । ११
[ ख ] प्रश्नोपनिषदि ५।५
[ ग ] प्र० ५ । ७
[ घ ] छा० ८ । १ । १

कोऽयं दहराकाशः के च कामा इत्यपेक्षायाम् "एष आत्मापहतपाप्मा, इत्यारभ्य "सत्यकामः सत्यसङ्कल्पः" (क) इत्यन्तेन दहराकाश आत्मा कामाश्चापहतपाप्मत्वादयस्तद्विशेषणीभूतगुणा इति हि विज्ञापयति "दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" (ख) इत्यत्र दहराकाशस्तदन्तर्वर्त्ति चयत् तदुभयमन्वेष्टव्यमित्युक्तमिति विज्ञायते " अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" (ग) इति हि व्यज्यते ॥ १३ ॥

## श्रीः ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥

## श्रीः १ । ३ । १४ ॥

" एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" (घ) इत्यहरहः सर्वासां प्रजानामन्तमजानतीनां दहराकाशोपरि 'गतिः' वर्त्तनं दहराकाशसमानाधिकरणो ब्रह्मलोकशब्दश्च दहराकाशः परं ब्रह्मेति ज्ञापयति तथाह्यन्यत्र सर्वासां परमात्मोपरिवर्त्तमानत्वं दृष्टं " तस्मिँल्लोकाः श्रिताः सर्वे" (ङ) "तदक्षरे परमे प्रजाः" (च) इत्यादौ ब्रह्मलोकशब्दश्च "एष ब्रह्मलोकः" (छ) इत्यादौ अन्यत्र दर्शनाभावेऽपि इदमेव पर्याप्तम् अस्य परमात्मत्वे लिङ्गं यद्दहराकाशोपरि सर्वस्य वर्त्तमानत्वं ब्रह्मलोकशब्दश्च ॥ १४ ॥

---

[ क ] छा० ८ । १ । ५
[ ख ] छा० ८ । १ । १
[ ग ] छा० ८ । १ । ६
( घ ) छा० ८ । ३ । २
[ ङ ] कठ० २ । ६ । १
[ च ] तै० ना० ६ । १ । ३
[ छ ] बृ० ६ । ३ । ३३

श्रीः॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः॥श्री॰ १।३।१५

"अथ य आत्मा स सेतुर्विधृतिः"(क)इति जगद्धृतेःपरमात्मनो-महिम्नोऽस्मिन् दहराकाश उपलब्धेश्चायं परः। स हि परमात्मनो महिमा "एष सेतुर्विधरणः" (ख) इत्यादिश्रुतेः॥ १५॥

श्रीः॥ प्रसिद्धेश्च॥ श्रीः १।३।१६॥

आकाशशब्दस्य "यदेष आकाश आनन्दः,, (ग) इति परमात्मन्यपि प्रसिद्धेश्चायम् परः सत्यसङ्कल्पत्वादिगुणवृन्दोपबृंहिता प्रसिद्धिः भूताकाशप्रसिद्धेर्बलयसीत्यर्थः॥ १६॥

श्रीः॥ इतरपरामर्शात्स इति चेन्नासम्भवात्॥

श्रीः १।३। १७॥

"अथ य एष सम्प्रसादः" इतीतरस्य जीवस्य परामर्शात् प्रकृताकाशः स इति चेन्नैतत् उक्तगुणानां तत्रासम्भवात् ॥१७॥

श्रीः॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु॥श्रीः १।३।१८॥

उत्तरत्र "य आत्मा अपहतपाप्मा,, (घ) इति जीवस्यापहतपाप्मत्वादिश्रवणान्नासम्भवः जाग्रतस्वप्नसुषुप्त्याद्यवस्थासु वर्त्तमानत्वात् स हि जीव इति चेन्नैतत् आविर्भूतस्वरूपस्तु कर्मारब्धशरीरसम्बन्धित्वेन तिरोहितापहतपाप्मत्वादिकः पश्चात्परं ज्योतिरुप-

---

[ क ] छा० ८।४।१ | [ ग ] तै० आ० ७।७।२
[ ख ] बृ० ६।४।२२ | [ घ ] छा० ८।७।१

सम्पद्याविर्भूतस्वरूपस्तत्राऽपहतपाप्मत्वादिगुणको जीवः प्रतिपादितः दहराकाशस्तु अतिरोहितकल्याणगुणगणसागर इति नायं जीवः ॥ १८ ॥

## श्रीः ॥ अन्यार्थश्च परामर्शः ॥ श्रीः १ । ३ । १९ ॥

"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते,, (क) इति जीवात्मनो दहराकाशोपसम्पत्त्या स्वरूपाविर्भावापादनरूपमाहात्म्यप्रतिपादनार्थोऽत्र जीवपरामर्शः ॥ १९ ॥

## श्रीः ॥ अल्पश्रुतेरिति चेत्तदुक्तम् ॥ श्रीः १ । ३ । २० ॥

अल्पस्थानत्वस्वरूपाल्पत्वश्रुतेर्नायं परमात्मेति चेत् तत्रोत्तरमुक्तं निचाय्यत्वादेवं व्योमवच्चेति ॥ २० ॥

## श्रीः ॥ अनुकृतेस्तस्य च ॥ श्रीः १ । ३ । २१ ॥

तस्य दहराकाशस्य परं ज्योतिषोऽनुकरणश्रवणाच्च जीवस्य न जीवो दहराकाशः "स तत्र पर्य्येति जक्षन् क्रीडन् रममाणः,,(ख) इत्यादिस्तदुपसम्पत्त्या स्वच्छन्दवृत्तिरूपस्तदनुकारः श्रूयते ॥ २१ ॥

## श्रीः ॥ अपि स्मर्य्यते ॥ श्रीः १ । ३ । २२ ॥

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" (ग) इति ॥ २२ ॥

## ❀श्रीः ॥ शब्दादेव प्रमितः ॥ श्रीः १ । ३ । २३ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ॥ ईशानो भूतभव्य-

---

[ क ] छा० ८ । ३ । ४
[ ख ] छा० ८ । १२ । ३
[ ग ] गी० १४ । २

स्य" (क) इत्यादौ अङ्गुष्ठप्रमितः परमात्मा। ईशानोभूतभव्य स्य। इति सर्वेश्वरत्व वाचिशब्दादेव ॥ २३ ॥

श्रीः॥हृद्यपेक्षयातु मनुष्याधिकारत्वात्॥श्रीः

१।३।२४ ॥

अनवच्छिन्नस्याऽप्युपासकहृदि वर्त्तमानत्वापेक्षमङ्गुष्ठप्रमितत्वं मनुष्याणामेवोपासनसम्भावनया तद्विषयत्वाच्च शास्त्रस्यमनुष्यहृदयापेक्षयेदमुक्तम्। स्थितं तावदुपरि समापयिष्यते ॥ २४ ॥

❀श्रीः॥ तदुपर्यपि बादरायणः सम्भवात् ॥ श्रीः

१।३।२५ ॥

तद्ब्रह्मोपासनमुपरि देवादिष्वप्यस्ति अर्थित्वसामर्थ्यसम्भवादिति भगवान् बादरायणो मेने। सम्भवश्च पूर्वोपार्जितज्ञानाऽविस्मरणाम्मन्त्रार्थवादेषु विग्रहादिमत्तया स्तुतिदर्शनात्तदुपपत्तये तत्सम्भवे तेषामेव प्रामाण्येन विग्रहादिमत्त्वाच्च ॥ २५ ॥

श्रीः॥ विरोधःकर्मणीति चेन्नानेकप्रतिपत्ते-

र्दर्शनात् ॥ श्रीः १।३।२६ ॥

विग्रहादिमत्त्वे एकस्यानेकत्र युगपत्सान्निध्यायोगात्कर्मणि विरोध इति चेन्न शक्तिमत्सुसौभरिप्रभृतिषु युगपदनेकशरीरप्रतिपत्तिदर्शनात् ॥ २६ ॥

---

[क] क०२।४।१२

## श्रीः॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानु-मानाभ्याम्॥ श्रीः १ । ३ । २७ ॥

वैदिके तु शब्दे विरोधप्रसक्तिर्देहस्य सावयवत्वेनोत्पत्तिमत्त्वादि-न्द्रादिदेवोत्पत्तेः प्राग्विनाशादूर्ध्वञ्च वैदिकेन्द्रादिशब्दानामर्थशून्य त्वमनित्यत्वं वा स्यादिति चेन्न॥ अतो वैदिकादेवेन्द्रादिशब्दादिन्द्रा द्यर्थसृष्टेः । न हीन्द्रादिशब्दा व्यक्तिवाचकाः अपि तु गवादिशब्दव-दाकृतिवाचिनः पूर्वस्मिन्निन्द्रादौ विनष्टे वैदिकेन्द्रादिशब्दादेव ब्रह्मा पूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपरमिन्द्रादिकं कुलालादि-वत् घटादिकं सृजतीति न कश्चिद्विरोधः कुत इदमवगम्यते ? श्रुति-स्मृतिभ्यां श्रुतिस्तावत् "वेदेन नामरूपे व्याकरोत् सतासती प्रजा पतिः" ( क ) "स भूरिति व्याहरत् स भूमिमसृजत" [ ख ] इत्यादि । स्मृतिरपि "सर्वेषां तु स नामानि कर्म्माणि च पृथक् पृथक् ॥ वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे,, (ग) इति ॥

## श्रीः॥अत एव च नित्यत्वम्॥श्रीः १ । ३ । २८ ॥

यतो ब्रह्मा वैदिकाच्छब्दादर्थान् स्मृत्वा सृजति अत एव "मन्त्र कृतोवृणीते,, (घ) "विश्वामित्रस्य सूक्तं भवति ,, (ङ) इति विश्वा-मित्रादीनां मन्त्रादिकृत्त्वेऽपिमन्त्रादिमयवेदस्य नित्यत्वं तिष्ठति अनधीतमन्त्रादिदर्शनशक्तान् पूर्वविश्वामित्रादीन् तत्तद्वैदिकशब्दैः

---

( क ) अष्ट० २ प्र०६ अ०२
( ख ) अष्ट० २ प्र० २
( ग ) मनुस्मृ० १ । २१
( घ )
( ङ ) का० ५ प्र०२ अ० ४

स्मृत्वा तदाकारानपरान् तच्छक्तियुक्तान् सृजति हि ब्रह्मा नैमित्तक-प्रलयानन्तरं ते चानधीत्यैतानेवमन्त्रादीनस्खलितान्पठन्ति अत-स्तेषां मन्त्रादिकर्तृत्वं वेदस्य नित्यत्वञ्च स्थितम् ॥ २८ ॥

प्राकृतप्रलये तु चतुर्मुखे वेदाख्यशब्देच विनष्टे कथं वेदस्य नित्यत्वमत आह—

**श्रीः॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधोद-र्शनात्स्मृतेश्च ॥ श्रीः १ । ३ । २९ ॥**

अत एव सृज्यानां समाननामरूपत्वात् प्राकृतप्रलयावृत्तावपि न विरोधः आदिकर्ता परमपुरुषो हि पूर्वरूपसंस्थानं जगत्स्मृत्वा तदाकारमेव जगत्सृजति वेदांश्च पूर्वानुपूर्वीविशिष्टानाविष्कृत्य चतुर्मुखाय ददातीति श्रुतिस्मृतिभ्यामादिकर्ता पूर्ववत् सृजतीत्यवगम्यते श्रुतिस्तावत् "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" ( क ) इत्यादिका "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" ( ख ) इति च । स्मृतिरपि । "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" ( ग ) इति वेदस्य नित्यत्वञ्च पूर्वपूर्वोच्चारणक्रमविशिष्टस्यैव सर्वदोच्चार्यमाणत्वम् ॥ २९ ॥

**❀श्रीः॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः॥ श्रीः १ । ३ । ३० ॥**

मधुविद्यादिषु वस्वादिदेवानामेवोपास्यत्वात्प्राप्यत्वाच्च तत्र

---

( क ) तै० ना० ६ । १ । ३८ | ( ग )

( ख ) श्वे०

वस्वादीनां कर्मकर्तृभावाविरोधेनोपास्यत्वासम्भवात् वसूनां सतां वसुत्वं प्राप्तमिति प्राप्यत्वासम्भवाच्च तत्र वस्वादीनामनधिकारं जैमिनिर्मेने ॥ ३० ॥

## श्रीः ॥ ज्योतिषि भावाच्च ॥ श्रीः १ । ३ । ३१ ॥

"तन्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषि परस्मिन् ब्रह्मणि देवानां साधारण्येन प्राप्तत्वेप्यधिकारभाववचना दन्यत्र वस्वाद्युपासनेऽनधिकारोन्यायसिद्धोऽवगम्यते ॥ ३१ ॥

## श्रीः॥भावं तु बादरायणोऽस्ति हि॥श्रीः १ ।३। ३२ ॥

मधुविद्यादिष्वपि वस्वादीनामधिकारभावं भगवान् बादरायणो मन्यते अस्ति हि वस्वादीनां सतां स्वावस्थब्रह्मणउपास्यत्वसम्भवः कल्पान्तरे वसुत्वादेः प्राप्यत्वसम्भवश्च "एकल एव मध्ये स्थाता" (क) इत्यादित्यस्य कारणावस्थां प्रतिपाद्य "य एतामेवं ब्रह्मोपनिषदं वेद" (ख) इति मधुविद्याया ब्रह्मविद्यात्वमाह-अतः कार्यकारणोभयावस्थं तत्रोपास्यं कल्पान्तरे वस्वादित्व मनुभूयाधिकारावसाने ब्रह्मप्राप्तिश्च न विरुद्धा ॥३२ ॥ इतिमध्वधिकरणम्

## ❀श्रीः॥ शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ श्रीः १ । ३ । ३३ ॥

ब्रह्मविद्यावैकल्येन स्वात्मानं प्रति हंसोक्तानादरता हि सूच्यते (१) "आजहारेमाश्शूद्र ! ,,(ग)इत्यादौ ब्रह्मविद्योपदेशे शिष्यं प्रति

---

(क) छा० ३ । ११ । १
(ख) छा० ३ । ११ । ३
(ग) छा० ४ । २ । ५
(१) इत्यन्तः पाठोनान्ध्रपुस्तके

शूद्रेत्यामन्त्रणेन शिष्यस्य ब्रह्मज्ञानाप्राप्त्या शुक्सञ्जातेति सूच्यते शोचनात् शूद्रः न जातियोगेन कुतः ? तदनादरश्रवणात् ब्रह्मविद्यावैकल्येन स्वात्मानं प्रति हंसोक्तानादरवाक्यश्रवणात् तदै वाचार्यं प्रति आद्रवणात् हि शब्दो हेतौ यतः शूद्र इत्यामन्त्रणं न जातियोगेन अत एव शूद्रस्य ब्रह्मोपासनाधिकारो न सूच्यते ॥३३॥

## श्रीः ॥ क्षत्रियत्वावगतेश्च॥ श्रीः १।३ । ३४ ॥

शुश्रूषोः क्षत्रियत्वावगतेश्च न जातियोगेन शूद्रेत्यामन्त्रणम् उपक्रमे "बहुदायी,, (क) इत्यादिना दानपतित्वबहुपक्वान्नदायित्व बहुग्रामप्रदानैश्च तस्य हि क्षत्रियत्वमवगम्यते ? ॥ ३४ ॥

## श्रीः ॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ श्रीः १।३।३५॥

उपरिष्ठाच्चास्यां विद्यायां ब्राह्मणक्षत्रिययोरेवान्वयो दृश्यते "अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च" (ख) इत्यादौ अभिप्र तारीहि चैत्ररथः क्षत्रियः, अभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वञ्च कापेयसाहचर्याल्लिङ्गादवगम्यते प्रकरणान्तरे हि कापेयसहचारिणश्चै त्ररथत्वं क्षत्रियत्वञ्चावगतम् "एतेन चैत्ररथं कापेया अयाजयन्" (ग) इति "तस्माच्चैत्ररथोनामैकः क्षत्रपतिरजायत" (घ) इति अतश्चायं शिष्यो न चतुर्थः ॥ ३५ ॥

## श्रीः ॥संस्कारपरामर्शात्तदभावाभिलापाच्च ॥

## श्रीः १ । ३ । ३६ ॥

विद्योपक्रमे "उपत्वानेष्ये" (ङ) इत्युपनयनपरामर्शाच्छूद्रस्य

---

(क) छा० ४।१।१
(ख) छा० ४।३।५
(ग)
(घ)
(ङ) छा० ४।४।५

तदभावाभिलापाच्चनशूद्रस्यब्रह्मविद्याधिकारः " न शूद्रे पातकं-किञ्चिन्नच संस्कारमर्हति (क) इति संस्कारो हि निषिद्धः ॥३६॥

**श्रीः॥ तदभावनिर्द्धारणे च प्रवृत्तेः॥श्रीः १।३।३७॥**

" नैतदब्राह्मणोविवुक्तमर्हति समिधं सोम्याहर "(ख) इति शूद्रत्वाभावनिश्चय एव उपदेशप्रवृत्तेश्चनाधिकारः ॥३७॥

**श्रीः॥श्रवणाध्ययनार्थप्रतिषेधात्॥श्रीः १।३।३८ ॥**

शूद्रस्य हि श्रवणाध्ययनादीनि निषिध्यन्ते " तस्माच्छूद्रसमीपे नाध्येतव्यम् " ( ग ) इति अनुपशृण्वतोऽध्ययनादि च न सम्भवति ॥ ३८ ॥

**श्रीः ॥ स्मृतेश्च ॥ श्रीः १ । ३ । ३९ ॥**

स्मर्यते हि शूद्रस्य वेदश्रवणादौ दण्डः "अथहास्यवेदमुपशृ-ण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् " उदाहरणेजिह्वाछेदोधारणे शरीरभेदः,, (घ) इति स्थितादुत्तरम् ॥ ३९ ॥

प्राकृतं परिसमाप्य प्रकृतमनुसरति—

**श्रीः ॥ कम्पनात् ॥ श्रीः १ । ३ । ४० ॥**

अङ्गुष्ठप्रमितप्रकरणमध्ये " यदिदंकिञ्चिज्जगत्सर्वंप्राणएजति-निसृतम्,, (ङ) इत्यादिनाअभिहिताङ्गुष्ठप्रमितप्राणशब्दनिर्दिष्टजानितभयात् वज्रादिवोद्यतात् अग्निवायुसूर्येन्द्रेन्दुप्रभृतिकृत्स्नजगत्क-म्पनादङ्गुष्ठप्रमितः परमपुरुष इति निश्चीयते ॥ ४० ॥

---

( क )
( ख ) छा० ४ । ४ । ५
( ग )
( घ ) गौतमधर्मे १२खण्डे १
( ङ ) कठोप० २ । ६ । २

श्रीः ॥ ज्योतिर्दर्शनात् ॥ श्रीः १ । ३ । ४१ ॥

तत्प्रकरणे "न तत्र सूर्योभाती, त्यारभ्य 'तस्यभासासर्वमिदंवि भाति,, (क) इतिभाःशब्दाभिहितस्यानवधिकातिशयज्योतिषोदर्श नादङ्गुष्ठप्रमितः परमपुरुषः ॥ ४१ ॥

❋श्रीः॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥

श्रीः १ । ३ । ४२ ॥

" आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म"(ख) इत्यादिना निर्दिष्टआकाशः " धूत्वाशरीरमकृतंकृतात्मा" (ग) इति प्रकृतात्प्रत्यगात्मनः परिशुद्धादर्थान्तरभूतः परमपुरुषः नामरूपयो-र्निर्वोढृत्वतदस्पर्शरूपार्थन्तरत्वामृतत्वादिव्यपदेशात् ॥ ४२ ॥

तत्त्वमस्यादिव्यपदेशात् न प्रत्यगात्मनोऽर्थान्तरभूतः परम-पुरुष इत्याशङ्कयाह---

श्रीः॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ श्रीः १।३।४३ ॥

" प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्,, (घ) "प्राज्ञेनात्मनान्वरूढः,, (ङ) इति सुषुप्त्युत्क्रान्त्योर्वाह्याभ्यन्तर-विषयज्ञानशून्यस्यप्रत्यगात्मनस्तदानीमेवप्राज्ञतया भेदेनव्यपदेशाद-र्थान्तरभूत एव ॥ ४३ ॥

श्रीः ॥ पत्यादिशब्देभ्यः ॥ श्रीः १ । ३ । ४४ ॥

परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायमर्थान्तर-

---

( क ) क० २ । ५ । १५
( ख ) छा० ८ । १४ । १
( ग ) छा० ८ । १३ । १
( घ ) वृ० ६ । ३ । २१
( ङ ) वृ०६ । ३ । ३५

भूतः "सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः,, ( क ) इति श्रुत्तरत्र श्रूयते ऐक्योपदेशोपि 'अवस्थितेरितिकाशकृत्स्नः'(१।४।२२) इत्यनेन जीवस्य शरीरभूतस्यात्मतयावास्थितेरिति स्वयमेव परिहरिष्यति ॥ ४४ ॥ इत्यर्थान्तरत्वाधिकरणम् ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

पादेऽस्मिन् सूत्राणि चतुश्चत्वारिंशत् ॥ ४४ ॥
दशाधिकरणानि च ॥ १० ॥

—( ·· )-*-( ·· )—

हरिः ओम् । तत्सत्

हतावद्ये हृद्ये हरिचरणपङ्केरुहयुगे ।
निबध्नन्त्यैकान्त्यं किमपि यतिभूभृद्गणितयः ॥
शुनाशीरस्कन्दद्रुहिणहरहेरम्बहुतभुक्—
प्रजेशा ( १ ) दिक्षुद्रप्रणतिपरिहारप्रतिभुवः ॥

---

[ क ] वृ० ६ । ४ । २२
( १ ) प्रजेशो यमः प्रभेश इति पाठे सूर्यः ।

श्रीहरये नमः ॥

प्रथमाध्याये चतुर्थपादारम्भः ॥

❀श्रीः ॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ श्रीः १ । ४ । १ ॥

एकेषां काठानां शाखायामानुमानिकं प्रधानमपि जगत्कारणत्वेन "महतः परमव्यक्तम्" (क) इत्युच्यत इति चेन्न पूर्वत्र "आत्मानं रथिनं विद्धि" (ख) इत्यादिषूपासनोपायेषु वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तेषु शरीराख्यरूपकविन्यस्तस्यात्राव्यक्तशब्देन गृहीतेः "इन्द्रियेभ्यः परा ह्यर्था" (ग) इत्यादिना हि वशीकार्यत्वे न हि परा उच्यन्ते तथाचोत्तरत्र श्रुतिरेवदर्शयति "यच्छेद्वाङ्मनसी प्राज्ञः (घ) इत्यादिना ॥ १ ॥

श्रीः ॥ सूक्ष्मन्तु तदर्हत्वात् ॥ श्रीः १ । ४ । २ ॥

सूक्ष्ममव्यक्तमित्यर्थः अव्यक्तमेव शरीरावस्थं कार्यार्हमित्यव्यक्तशब्देन शरीरमेव गृह्यते ॥ २ ॥

यदि रूपकविन्यस्तानामेव ग्रहणं किमर्थम् ॥ "अव्यक्तात्पुरुषः परः" (ङ) इत्यत आह—

श्रीः ॥ तदधीनत्वादर्थवत् ॥ श्रीः १ । ४ । ३ ॥

पुरुषाधीनत्वादात्मशरीरादिकमर्थवदुपासननिर्वृत्तये भवति

[ क ] कठोप० ३ । ११
[ ख ] क० ३ । ३
[ ग ] क० ३ । १० ।
[ घ ] क० ३ । १३
[ ङ ] क० ३ । ११

पुरुषोऽन्तर्यामी सर्वमात्मादिकं प्रेरयन्नुपासनोपायत्वेन वशीकार्यकाष्ठा प्राप्यश्चेति "सा काष्ठा सा परा गतिः (क) इत्युच्यते ॥ ३ ॥

श्रीः ॥ ज्ञेयत्वावचनाच्च ॥ श्रीः १ । ४ । ४ ॥

अत्राव्यक्तस्य ज्ञेयत्वावचनाच्च न कापिलमव्यक्तम् ॥ ४ ॥

श्रीः ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ श्रीः १ । ४ । ५ ॥

"अशब्दमस्पर्शमि'त्यारभ्य' निचाय्यतम्,, (ख) इति वदतीति चेन्न "तद्विष्णोः परमं पदम्" "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" (ग) इत्यादिना प्रकृतः प्राज्ञ एव निचाय्यतामिति ज्ञेय उच्यते ५ ॥

श्रीः ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥

श्रीः १ । ४ । ६ ॥

उपास्योपासनोपासकानां त्रयाणामेवास्मिन् प्रकरणे ज्ञेयत्वेनोपन्यासः प्रश्नश्च न प्रधानादेः "अध्यात्मयोगाधिगमेन देवं मत्वा (घ) इत्यादिरुपन्यासः "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके,, (ङ) इत्यादिकश्च प्रश्नः ॥ ६ ॥

श्रीः ॥ महद्वच्च ॥ श्रीः १ । ४ । ७ ॥

"बुद्धेरात्मा महान्परः" ( च ) इत्यात्मशब्दाद्यथा न तान्त्रिको महान् तथाऽव्यक्तमपीति ॥ ७ ॥

---

| | |
|---|---|
| [ क ] क० ३ । ११ | [ घ ] क० २ । १२ |
| [ ख ] क० १ । ३ । १५ | [ ङ ] क० १ । २० |
| [ ग ] क० ३ । १२ | ( च ) क० ३ । ११ |

❀श्रीः ॥ चमसवदविशेषात् ॥ श्रीः १ । ४ । ८ ॥

"अजामेकामि'त्यारभ्य'बह्वीः प्रजाः सृजमानाम्"इत्यत्र न तन्त्र सिद्धा प्रकृतिः कारणत्वेनोक्ता जन्माभावयोगमात्रेण तस्या एव प्रतीतिः "अर्वाग्बिलश्चमस,,(क) इतिवत् प्रकरणे विशेषकाभा वात्"यथेदन्तच्छिर"(क)इति हि चमसोविशिष्यते यौगिकशब्दाद्वि शेषप्रतीतिर्हि विशेषकापेक्षा ? ॥ ८ ॥

श्रीः ॥ ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ॥

श्रीः १ । ४ । ९ ॥

ज्योतिर्ब्रह्म ब्रह्मकारणिकैवेयमजा तथा ब्रह्मकारणिकाया एव प्रतिपादकमेतत्स्वरूपं मन्त्रश्च तैत्तरीया अधीयते "अणोरणीयान्" इत्यारभ्य "अतः समुद्रागिरयश्च,, (ख) इत्यादिना सर्वस्य ब्रह्मण उत्पत्या तदात्मकत्वप्रतिपादनसमये "अजामेकाम्" इति पठन्ति अतस्तत्प्रत्यभिज्ञानादियं ब्रह्मकारणिकेति निश्चीयते ॥ ९ ॥

श्रीः ॥ कल्पनोदेशाच्च मध्वादिवदविरोधः ॥

श्रीः १ । ४ । १० ॥

कल्पना सृष्टिः यथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" (ग) "अस्मान् मायी सृजते विश्वमेतत्,, (घ) इत्यादिना सृष्ट्युप-

[ क ] बृ० ४ । २ । ३

[ ख ] तै० ना० ६ । १० । ३

[ ग ] तै० ना० ६ । १ । ३८

[ घ ] श्वे० ४ । ९

3678

देशात् अजात्वब्रह्मकार्यत्वयोरविरोधश्च प्रलयकाले नामरूपे विहा याऽचिद्वस्त्वपि सूक्ष्मरूपेण ब्रह्मशरीरतया तिष्ठतीत्यजात्वं, सृष्टि- काले नामरूपे भजमाना प्रकृतिः ब्रह्मकारणिका । यथाऽऽदित्यस्य सृष्टिकालेवस्वादिभोग्यरसाधारतया मधुत्वं कार्यत्वञ्च, तस्यैव प्रलय काले मध्वादिव्यपदेशानर्हसूक्ष्मरूपेणावस्थानमकार्यत्वञ्च मधुविद्या याम् प्रतीयते "असौ वा आदित्यो देवमधु,,(क)नैवोदेतानास्तमेता एकल एव मध्ये स्थाता,,(ख)इति तद्वत्॥१०॥इति चमसाधिकरणम्

## ❀श्रीः ॥ नसङ्ख्योपसङ्ग्रहादपि नानाभावादति- रेकाच्च ॥ श्रीः १ । ४ । ११ ॥

"यस्मिन् पञ्चपञ्चजनाः,,(ग)इत्यत्र पञ्चविंशतिसङ्ख्योपसङ्ग्रहा- दपि न तान्त्रिकान्येतानि. यस्मिन्निति यच्छब्दनिर्दिष्टब्रह्माधारतया तेभ्यः पृथग्भावात् एतेषां तत्त्वातिरेकाच्च यच्छब्दनिर्दिष्टमाकाश- श्चेति द्वयमतिरिक्तं संख्योपसंग्रहादपीत्यपिशब्दान्नात्र पञ्चविंशति- संख्योपसंग्रहः"दिक्सङ्ख्येसंज्ञायाम्" ( पा२।१।५० ) इति संज्ञावि षयोऽयं पञ्चजना इति. पञ्चजना नाम केचित्ते पञ्चपञ्चजना इत्युच्यन्ते सप्त सप्तर्षय इतिवत् ॥ ११ ॥

## श्रीः ॥ प्राणादयो वाक्यशेषात् ॥ श्रीः १।४।१२॥

पञ्चजनसञ्ज्ञिताः प्राणादयः पञ्चेन्द्रियाणीति "प्राणस्य- प्राणमुत चक्षुषचक्षुः,, ( घ ) इत्यादिवाक्यशेषादवगम्यते

---

[ क ] छा० ३ । १ । १
[ ख ] छा० ३ । ११ । १
[ ग ] बृ० ६ । ४ । १७
[ घ ] माध्यन्दिनशाखायाम्

चक्षुःश्रोत्रसाहचर्यात् घ्राणान्नशब्दावपि स्पर्शनादीन्द्रियविषयौ ॥ १२ ॥

श्रीः ॥ ज्योतिषैकेषामसत्यन्ने ॥ श्रीः १ । ४ । १३ ॥

एकेषां शाखिनां काण्वानाम् "अन्नस्यान्नम्" (क) इत्यसति "तन्देवाज्योतिषांज्योतिः" (ख) इत्युपक्रमगतेन ज्योतिःशब्देन पञ्चपञ्जना इन्द्रियाणीति ज्ञायन्ते ज्योतिषां ज्योतिः प्रकाशाकानां प्रकाशकं ब्रह्मेत्युक्त्वाऽनन्तरम् "पञ्चपञ्जनाः" इत्युक्तेः । ते प्रकाशकाः पञ्चेन्द्रियाणीति गम्यते ॥ १३ ॥

❀श्रीः ॥ कारणत्वेन चाकाशादिषु यथाऽपदिष्टोक्तेः ॥ श्रीः १ । ४ । १४ ॥

आकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्येषु "असद्वा इदमग्र आसीत्,, "तद्धेदंतर्ह्यव्याकृतमासीत्,, इत्यादिषु अनिर्ज्ञातविशेषेषु च "आत्मा वा इदमेक एवाग्र आसीत्" "सईक्षत लोकान्नुसृजाः" इति विशेषवाचिवाक्यनिर्दिष्टस्यैवोक्तेः न तान्निकाऽव्याकृतादिकारणवादप्रसङ्गः ॥ १४ ॥

श्रीः ॥ समाकर्षात् ॥ श्रीः १ । ४ । १५ ॥

"सोऽकामयत बहुस्यां प्रजायेय" इतिपूर्वनिर्दिष्टस्यसर्वज्ञस्यैव,, असद्वाइदमग्रमासीद्,, इत्यत्रसमाकर्षात्स एवेतिगम्यते । तद्धेदन्तर्ह्यव्याकृतमासीदिति निर्दिष्टस्यैव "स एष इह प्रविष्ट आनखाग्रेभ्यः"

---

( क ) माध्यन्दिन पाठे

( ख ) बृ० ६ । ४ । १६

(क) "पश्यत्यचक्षुः,, (ख) इत्यत्र सगाकर्षादेष एवाऽव्याकृतशब्दनिर्दिष्ट इति निश्चीयते असदव्याकृतशब्दौ हि तदानीं नामरूपविभागाभावा दुपपद्येते ॥ १५ ॥ इतिकारणत्वाधिकरणम्

❁ श्रीः ॥ जगद्वाचित्वात् ॥ श्रीः १ । ४ । १६ ॥

"ब्रह्म ते ब्रुवाणि" इत्युपक्रम्य "यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य चैतत्कर्म स वै वेदितव्यः,, ( ग ) इत्यत्र कर्मशब्दस्यै-तच्छब्दसामानाधिकरण्येन क्रियत इति व्युत्पत्त्या जगद्वाचित्वात् परमेव ब्रह्म वेदितव्यतयोपदिष्टम् ॥ १६ ॥

श्रीः ॥ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥

श्रीः १ । ४ । १७ ॥

"एतैरात्मभिर्भुङ्क्ते,, [घ] "अथास्मिन्प्राण एवैकधाभवति,, [ङ] इति च जीवादिलिङ्गान्न पर इति चेदेतत् प्रतर्दनविद्यायामेव परिहृतं. पूर्वापरपर्यालोचनया ब्रह्मपरत्वे निश्चिते तदनुगुणतया नेयमन्यल्लिङ्गमिति ॥ १७ ॥

श्रीः ॥ अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्या-मपि चैव मेके ॥ श्रीः १ । ४ । १८ ॥

"तौ ह सुप्तं पुरुषमाजग्मतुः" ( च ) इत्यादिना देहातिरि-क्तजीवसद्भावप्रतिपादनं तदतिरिक्तपरमात्मसद्भावज्ञापनार्थमिति

---

( क ) बृ० ३ । ४ । ७
( ख ) श्वे० ३ । १९
( ग ) कौ० ४ । १८
( घ ) कौ० ४ । २०
( ङ ) कौ० ४ । १९
( च ) कौ० ४ । १८

"क्वैष एतद्बालाके पुरुषोऽशयिष्ट" [ क ] इतिप्रश्नात् "अथास्मिन्प्राणएवैकधाभवति" "सतासोम्य ! तदासम्पन्नोभवति" इति वाक्यसमानार्थकात्प्रतिवचनाच्च अवगम्यते एके वाजसनेयिनोऽपि एतत्प्रतिवचनसमानार्थं वाक्यंस्पष्टमधीयते च "क्वैष एतत्"(ख) इत्यादि "यएषोन्तर्हृदय आकाशस्तस्मिन्शेते ( ग ) इत्यन्तम् ॥ १८ ॥

❀श्रीः ॥ वाक्यान्वयात् ॥ श्रीः १ । ४ । १९ ॥

"नवा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय"[घ]इत्यारभ्य"आत्मा वा अरे द्रष्टव्यः"[घ]इत्यादिनोपदिष्टः परमात्मा "अमृतत्वस्य तु नाशास्ति वित्तेन" [ ङ ] इत्यारभ्य 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्,, [ ङ ] इत्यादि येनेदं सर्वं विजानाति,, [च] इत्यन्तस्यकृत्स्नस्य वाक्यस्य परमात्मन्येवान्वयात् ॥ १९ ॥

अस्मिन्प्रकरणेप्रकरणान्तरे च जीववाचिशब्देन परमात्मनोभिधाने तत्सामानाधिकरण्येच कारणं मतान्तरेणाह—

श्रीः ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥

श्रीः १ । ४ । २० ॥

"आत्मनि खल्वरे दृष्टे श्रुते मते,, [घ] इत्यादिना परमात्मज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य तत्कार्यतया तस्मादनतिरिक्तत्वं ज्ञापयितुं जीवशब्देन परमात्माभिधानम् इत्याश्मरथ्यः ॥ २० ॥

---

( क ) कौ० ४ । १८
( ख ) बृ० ४ । १ । १६
( ग ) बृ० ४ । १ । १७
( घ ) बृ० ६ । ५ । ६
( ङ ) बृ० ४ । ४ । २
( च ) बृ० ४ । ४ । १४

श्रीः ॥ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥

श्रीः १ । ४ । २१ ॥

उत्क्रमिष्यतो मुक्तस्य परमात्मस्वरूपभावादात्मशब्देन परमात्माभिधानमित्यौडुलोमिः ॥ २१ ॥

श्रीः ॥ अवस्थितेरिति काशकृत्स्नः ॥

श्रीः १ । ४ । २२ ॥

"य आत्मनितिष्ठन्नात्मनोन्तरः" इत्यादिना जीवात्मनि परमात्मन आत्मतयावस्थितेरिति काशकृत्स्न आचार्यो मन्यते इदमेव मतं सूत्रकारः स्वयमेव स्वीकृतवानिति मतत्रयमुपन्यस्य तद्विरोध्य तदभिधानादन्यस्यानभिधानाच्च निश्चीयते ॥ २२ ॥

इतिवाक्यान्वयाधिकरणम्

❀श्रीः ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥

श्रीः १ । ४ । २३ ॥

जगदुपादानकारणमपि परं ब्रह्म. न निमित्तमात्रम् "उतऽतमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" ( क ) इति येनादेष्ट्रा निमित्तभूतेन विज्ञातेन चेतनाचेतनात्मकं कृत्स्नं जगद्विज्ञातं भवतीति । आदेष्टृविज्ञानेन सर्वविज्ञानप्रतिज्ञा तदुपपादनरूपमृत्कार्यदृष्टान्तानुपरोधात् आदिश्यतेऽनेनेत्यादेश इत्यादेशशब्देनादेष्टाऽभिधीयते आदेशः प्रशासनम् "एतस्य वा अक्षरस्य प्रशासनेगार्गि !" इत्यादिश्रुतेः ॥ २३ ॥

---

( क ) छा० ६ । १ । ३ ।

श्रीः ॥ अभिध्योपदेशाच्च ॥ श्रीः १ । ४ । २४ ॥

"तदैक्षत बहुस्यां प्रजायेय,, इति निमित्तभूतस्यैवेश्वरस्यैव चिदचिद्रूपजगदाकारेणात्मनो बहुभवनसङ्कल्पोपदेशाच्चोपादानमपीति विज्ञायते ॥ २४ ॥

श्रीः ॥ साक्षाच्चोभयाम्नानात् ॥ श्रीः १ । ४ । २५ ॥

"ब्रह्मवनं ब्रह्म स वृक्ष आसीद् ब्रह्माध्यतिष्ठद्भुवनानि धारयन्,, [ क ] इत्युपादानं निमित्तञ्च ब्रह्मैवेति स्वशब्देनैवोभयाम्नानाच्च ॥ २५ ॥

श्रीः ॥ आत्मकृतेः ॥ श्रीः १ । ४ । २६ ॥

"सोकामयत,, इति निमित्तभूतस्य स्वस्यैव जगदाकारेण कृतेः "तदात्मानं स्वयमकुरुत" (ख) इत्युपदिश्यमानोयं परः पुरुषो जगन्निमित्तमुपादानञ्चेति विज्ञायते ॥ २६ ॥

परस्य ब्रह्मणो निरवद्यत्व सत्यसङ्कल्पत्वादेस्तद्विपरीतानन्ताऽपुरुषार्थाश्रयजगदाकारेणात्मकृतेश्चाविरोधः कथमित्याशङ्क्याह-

श्रीः ॥ परिणामात् ॥ श्रीः १ । ४ । २७ ॥

अत्रोपदिश्यमानात्परिणामात्तदविरोध एव अविभक्तनामरूपातिसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमपुरुषः स्वयमेव "सोकामयत बहुस्याम् प्रजायेय,, इति विभक्तनामरूपाचिदाचिद्वस्तुशरीरको भवेयमिति सङ्कल्प्य "इदं सर्वमसृजत यदिदं किञ्च" ( ख ) स्वशरीरभूतमतिसूक्ष्मचिदचिद्वस्तु स्वस्माद्विभज्य "तत्सृष्ट्वा

---

( क ) अष्ट० २ प्र० ८ अनु० ७-८

( ख ) तै० आनन्द० ७ । १

तदेवानुप्राविशत्" इति स्वस्माद्विभक्ते चिदचिद्वस्तुनि स्वयमे वात्मतयाऽनु प्रविश्य "सच्चत्यच्चाभवन्निरुक्तञ्चानिरुक्तञ्च निलयनं चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च सत्यमभवद्" इति हि स्वस्य बहुभवनरूपपरिणाम उपदिश्यते अतो न कश्चिद्विरोधः, अविभागावस्थायामपि जीवस्तत्कर्म च सूक्ष्मरूपेण तिष्ठतीति वक्ष्यति "न कर्माविभागादिति चेन्नानादित्वादुपपद्यतेचाप्युपलभ्यते च" २ । १ । ३५ ॥ इति ॥ २७ ॥

## श्रीः ॥ योनिश्च हि गीयते ॥ श्रीः १ । ४ । २८ ॥

"यद्भूतयोनिम्" ( क ) इत्यादिषु योनिश्च हि गीयते अतश्चोपादानमपि ॥ २८ ॥

## ❀श्रीः ॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ श्रीः १ । ४ । २९ ॥

" जन्माद्यस्य यतः " १ । १ । २ ॥ इत्यादिना, एतदन्तेन न्यायेन सर्वे वेदान्ताः ब्रह्मपरा व्याख्याताः ॥ द्विरुक्तिरध्यायपरिसमाप्तिद्योतनाय ॥ २९ ॥ इति सर्वव्याख्यानाधिकरणम् ।

इतिश्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

पादेऽस्मिन् सूत्राण्येकोनत्रिंशत् ॥ २९ ॥
अधिकरणानि चाष्टौ ॥ ८ ॥

समाप्तश्चायं समन्वयाध्यायः प्रथमः ॥ १ ॥
हरिः ओम् तत्सत्

---

( क ) मु० १ । १ । ६

श्रीमते रामानुजायनमः ॥

## श्री ६ मद्भगवद्रामानुजाचार्यविरचिते,

# वेदान्तसारे,

## द्वितीयाध्यायारम्भः ॥

-:○❀○:-

❀श्रीः ॥ स्मृत्यनवकाशदोषप्रसङ्ग इतिचेन्नान्य-स्मृत्यनवकाश दोषप्रसङ्गात् ॥ श्रीः २ । १ । १ ॥

उपबृंहणापेक्षे वेदान्तार्थनिश्चये सति कपिलस्मृत्युपबृंहणेन वेदान्तार्थः प्रधानकारणवाद इत्यनभ्युपगमे कापिलस्मृते-रुपबृंहणानन्वयेनाऽनवकाशदोषप्रसक्तिरिति चेन्न. अन्यासां वेदाविरोधिनीनां बह्वीनां मन्वादिस्मृतीनामनवकाशदोषप्रसक्तेः वेदस्योपबृंहणापेक्षत्वेऽप्यनन्यपराविरुद्धानेकस्मृतिषु सतीषु विरुद्धार्थाया वेदोदितार्थविशदीकरणत्वाभावेन तस्या उपबृंहणत्वमन्याय्यमित्यर्थः ॥ १ ॥

योगीन्द्रकपिलस्य तथानुपलब्धेः कथं स्मृत्यन्तरमेतस्य न्याय्यमिति चेत्तत्राह—

श्रीः ॥ इतरेषाञ्चानुपलब्धेः ॥ श्रीः २ । १ । २ ॥

वेदार्थसाक्षात्कारचतुरमन्वादियोगीन्द्राणां कपिलदृष्टार्थानुपलब्धेः कपिलोपलब्धिर्भ्रम एव ॥ २ ॥ इति स्मृत्यधिकरणम्

❀श्रीः ॥ एतेन योगः प्रत्युक्तः ॥ श्रीः २ ।१। ३॥

योगस्य हैरण्यगर्भस्यापि कापिलस्मृतिवद्वेदविरुद्धत्वा-विशेषात्तद्वन्निरासः ॥ ३ ॥ इति योगप्रत्युक्त्यधिकरणम्

❁श्रीः ॥ नविलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥

श्रीः २ । १ । ४ ॥

विकारास्पदत्वेनाज्ञत्वेनाऽपुरुषार्थाश्रयत्वेन च जगतो ब्रह्मविलक्षणत्वात् तत्कार्यत्वं नसम्भवति विलक्षणत्वञ्च शब्दाच्चावगम्यते "विज्ञानञ्चाविज्ञानञ्च" इत्यादेः ४ ॥

श्रीः ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥

श्रीः २ । १ । ५ ॥

"तं पृथिव्यब्रवीत् ( क ) आपो वा अकामयन्त ( ख ) इत्यादौ ज्ञानकार्यव्यपदेशस्तत्तदभिमानिदेवताविषय इति "हन्ताहमिमास्तिस्रो देवताः" इतिदेवताशब्देनविशेषितत्वात् "अग्निर्वाग्भूत्वा मुखं प्राविशत्" ( ग ) इत्यादिना तत्तदचिद्वस्त्वभिमानित्वेन देवतानुगतेश्चावगम्यते ॥ ५ ॥

श्रीः ॥ दृश्यते तु ॥ श्रीः २ । १ । ६ ॥

विलक्षणयोरपि कार्यकारणभावः सम्भवति माक्षिकादिभ्यः कृम्याद्युत्पत्तिदर्शनात् ॥ ६ ॥

श्रीः ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥

श्रीः २ । १ । ७ ॥

एवं तर्हि कार्यं कारणेऽसदिति चेन्न. सालक्षण्यनियमप्रतिषेधमात्रत्वात् पूर्वोक्तं कार्यकारणयोर्वस्त्वैक्यं न त्यक्तम् ॥ ७ ॥

---

( क ) का० ५ प्र० ५ । म० २
( ख ) म्र० ३ प्र० १ म० ५
( ग ) ऐतरेयोप० २ । ४

श्रीः ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥श्रीः२।१।८॥

जगतो ब्रह्मकारणत्वेन वस्त्वैक्येन तस्मिन्नपीत्यादौ जगतइव ब्रह्मणोऽपि विकारित्वाद्यनिष्टप्रसङ्गाद्वेदान्तवाक्यं सर्वमसमञ्जसं स्यात् ॥ ८ ॥

नैतत्——

श्रीः ॥ न तु दृष्टान्तभावात् ॥ श्रीः २ । १ । ९॥

"यस्यात्मा शरीरम्" (क) यस्याऽव्यक्तं शरीरम् (ख)इत्यादिश्रुतिसिद्धचिदचिद्वस्तुशरीरस्य ब्रह्मणः कार्यकारणभावेनाऽवस्थाने गुणदोषव्यवस्थितेर्दृष्टान्तसद्भावात् यथा जीवस्य सशरीरस्य मनुष्याद्यात्मनो बालत्व-युवत्व-स्थविरत्वादिभावेपि बालत्वादयः शरीरे तिष्ठन्ति ज्ञानसुखादयश्चात्मन्येव तद्वदत्रापि शरीरभूतचिदचिद्वस्तुगतान्यज्ञानविकारानिष्टानि ( १ ) आत्मभूते तु ब्रह्मणि नित्यनिरवद्यत्वाविकारित्वसार्वज्ञ्यसत्यसङ्कल्पत्वादयः ॥ ९ ॥

श्रीः ॥ स्वपक्षदोषाच्च ॥ श्रीः २ । १ । १० ॥

प्रधानकारणवादे दोषाश्चायमेव आह्यः प्रधानकारणवादे हि निर्विकारपुरुषसन्निधानात् प्रकृतिप्रवृत्ता इतरेतरधर्माध्यासादयो दुरुपपादाः अन्यत्रान्यधर्मानुसन्धानरूपोऽध्यासो निर्विकारपुरुषस्य न सम्भवति अचेतनायाः प्रकृतेरनुसन्धानरूपोऽध्यासः सुतरां न सम्भवति ॥ १० ॥

श्रीः ॥ तर्काप्रतिष्ठानादपि ॥ श्रीः २ । १ । ११ ॥

प्रधानकारणवादस्य तु तर्कमूलत्वेन तस्याऽप्रतिष्ठितत्वादपि त्याज्यम् प्रधानम् ॥ ११ ॥

---

( क ) माध्यन्दिनशाखायाम्
( ख ) सुबालोपनि०७ खण्डे

( १ ) विकारादीनि दोषा इति तैलङ्गपुस्तकपाठः

श्रीः ॥ अन्यथानुमेयमिति चेदेवमप्यनि-
र्मोक्षप्रसङ्गः ॥श्रीः २ । १ । १२ ॥

आधुनिकानां तर्काणामप्रतिष्ठितत्वे कृते (२) ( कृतप्रकारात् ) प्रकारान्तरेण प्रधानमनुमेयमिति चेदेवमपि त्वत्तोऽधिकतर्ककुशल-सम्भावनया अप्रतिष्ठितत्वादनिर्मोक्षप्रसङ्गो दुर्वारः स्यात् ॥ १२ ॥

❋श्रीः ॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥
श्रीः २ । १ । १३ ॥

एतेन साङ्ख्यस्मृतिनिराकरणहेतुना तर्काप्रतिष्ठितत्वादिनाऽत्र शिष्टाश्च कणभक्षाक्षपादक्षपणकादिस्मृतयो निराकृताः ॥ १३ ॥

इति शिष्टापरिग्रहाधिकरणम् ।

श्रीः॥भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥
श्रीः॥२।१।१४

यदि चिदचिद्वस्तुशरीरकत्वेन ब्रह्मणोपि सशरीरत्वमिष्यते तर्हि जीववत् सशरीरत्वेन ब्रह्मणोऽपिशरीरसम्बन्धप्रयुक्तसुख दुःखभोक्तृत्वापत्तेर्जीवादविभागप्रसक्तिरिति चेन्न. स्यादेव जीवाद्विभागो निरवद्यत्वकल्याणगुणाऽऽकरत्वेन. ब्रह्मणोनहि शरीरत्वप्रयुक्तम् मनिष्टभोक्तृत्वमपित्वन्यवश्यत्वकृतं यथा लोके राज्ञः सशरीरत्वेप्यनन्यवश्यत्वात्स्वाज्ञाऽतिवृत्तिकृताऽनिष्टभोक्तृत्व-मेतरसमानम् ॥ १४ ॥

---

( २ ) कृत इत्यन्तः पाठोनान्ध्रपुस्तके ।
पठ्यते च कृतप्रकारादित्यधिकम् ॥

## ❀श्रीः ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥

## श्रीः २ । १ । १५ ॥

कारणभूताच्च ब्रह्मणोऽनन्यत्वं कार्यभूतस्यजगतो वाचारम्भणशब्दादिभ्यो वाक्येभ्योऽवगम्यते "वाचारम्भणंविकारो नामधेयंमृत्तिकेत्येवसत्यम्" [ क ] सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं 'तदैक्षत बहुस्यां प्रजायेयेति' 'ऐतदात्म्यमिदं सर्वं' 'तत्त्वमसी' त्यादिभ्यः ॥ १५ ॥

## श्रीः ॥ भावेचोपलब्धेः ॥ श्रीः २ । १ । १६ ॥

घटादिकार्यभावेच तदेवेदं मृद्द्रव्यमित्युपलब्धेश्च कारणादनन्यत्कार्यम् ॥ १६ ॥

## श्रीः ॥ सत्वाच्चापरस्य ॥ श्रीः २ । १ । १७ ॥

कार्यस्य कारणे सत्त्वाच्च तस्मादनन्यत्कार्यम्, घटशरावादिकं पूर्वं मृदेवासीदिति हि घटादिर्मृदात्मनोपलभ्यते ॥ १७ ॥

## श्रीः ॥ असदुपदेशान्नेति चेन्न, धर्मान्तरेण-वाक्यशेषात् युक्तेः शब्दान्तराच्च॥ श्रीः २।१।१८॥

इदं वा अग्रे नैवकिञ्चनासीद्" (ख) इति कार्यस्य तदानीमसद्व्यपदेशात्कारणे कार्यमसदिति चेन्न, स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगादसत्वव्यपदेशः कुतः " तदसदेव सन्मनोऽकुरुतंस्याम" (ख) इति वाक्यशेषादवगम्यते. मनस्कारोहि विद्यमानस्यैव. युक्ति

---

( क ) छा० ६।१।५

( ख ) अष्ट० २ प्र० २ अ० ५

आसद्व्यपदेशो धर्मान्तरयोगनिमित्त इति गमयति. पिण्डत्वघटत्व कपालत्वादिपरस्परविरोधिभिर्भावरूपैः धर्मैः घटः प्राङ्नासीत् इदानीमस्ति भविष्यति चेति सदा विद्यमानस्यैव मृद्द्रव्यस्य ह्यस-दादिव्यपदेशः तथा शब्दान्तरञ्च "तद्धेदन्तर्ह्यव्याकृतमासीत्" इत्यादि. ॥ १८ ॥

श्रीः ॥ पटवच्च ॥ श्रीः २ । १ । १९ ॥

तन्तव एव संयोगविशेषभाजः पट इति नामान्तरादिकं भजन्ते तद्वत् ब्रह्मापि ॥ १९ ॥

श्रीः ॥ यथा च प्राणादिः ॥ श्रीः २ । १ । २० ॥

यथा च वायुरेक एव वृत्तिविशेषैः प्राणापानादिनामानि भजते, तथा ब्रह्मापीति तदनन्यत्वं जगतः ॥ २० ॥ रत्यारम्भणाधिकरणम्

❀श्रीः ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥

श्रीः २ । १ । २१ ॥

"तत्त्वमसि""अयमात्माब्रह्म"(क)इतिकार्यभूतस्य जीवस्य ब्रह्म-भावव्यपदेशाद्ध्यनन्यत्वमुक्तम्. एवं तर्हि सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण आत्मनो हितरूपकार्यजगदकरणम्, अहितरूपकार्यकरण ञ्चत्यादिदोषप्रसक्तिः ॥ २१ ॥

नैतत्——

श्रीः ॥ अधिकन्तुभेदनिर्देशात् ॥ श्रीः २ । १ । २२॥

कार्यकारणयोरनन्यत्वेपि जीवस्वरूपाद्ब्रह्मस्वरूपमर्थान्तरम् "कर-

(क) बृ० ६ । ४ ।

णाधिपाधिपः' 'विद्याविद्ये ईशाते यस्तु सोन्य" इत्यादि भेदानिर्देशा-
च्चिदचिद्वस्तुशरीरं ब्रह्मैव कारणावस्थं कार्यावस्थञ्चेति गुणादोष-
व्यवस्थितिरिति नतु दृष्टान्तभावादिति ह्युक्तं "यस्य पृथिवीशरीरं"
"यस्यात्मा शरीराम्" इत्यादिश्रुतिशतसमधिगतं चिदचिद्वस्तुशरी-
रकत्वम्. ॥ २२ ॥

श्रीः ॥ अश्मादिवच्च तदनुपपत्तिः ॥ श्रीः २।१।२३ ॥

अश्मकाष्ठलोष्ठतृणादेरचेतनस्येव जीवस्य "अनीशया शोचति मुह्यमानः" इत्यादिनात्यन्तविसजातीयतयाभिहितस्य सर्वज्ञसत्यसङ्कल्पब्रह्मस्वरूपतानुपपत्तिः सिद्धयत्येवेत्यर्थः ॥ २३ ॥

❀श्रीः ॥ उपसंहारदर्शनान्नेति चेन्न, क्षीरवद्धि ॥

श्रीः ॥ २ । १ । २४ ॥

कार्यनिर्वृत्तावनेककारकोपसंहारदर्शनाद्ब्रह्मैकमेव जगदाकारकार्यं न भवेदिति चेन्न, क्षीरस्यैकस्यैव दधिभाववत् ब्रह्मणोऽपि सम्भवति. ॥ २४ ॥

श्रीः ॥ देवादिवदपि लोके ॥ श्रीः २ । १ । २५ ॥

यथा देवानां शास्त्रावगतशक्तेः स्वसङ्कल्पादेव स्वस्वलोके स्वापेक्षितनानारूपभावः, एवं ब्रह्मणोऽपि शास्त्रावगतशक्तेः सर्वमुपपन्नम् ॥ २५ ॥ इति उपसंहारदर्शनाधिकरणम्

❀श्रीः॥ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥

श्रीः २ । १ । २६ ॥

चिदचिद्वस्तुशरीरकं ब्रह्मैव कार्याकारेणावस्थितमितिह्युक्तं तत्र ब्रह्मणा शरीरिणो निरवयवत्वेन कृत्स्नस्य ब्रह्मणः कार्यत्वेनो-

प्रयोगप्रसक्तिः कार्यावस्थायामंशान्तरेणावस्थितमिति च पक्षे निरवयवत्वशब्दकोपो वा स्यादतो ब्रह्म न कारणम्. ॥ २६ ॥

परिहरति--

श्रीः ॥ श्रुतेस्तु शब्दमूलत्वात् ॥ श्रीः ॥ २।१।२७ ॥

श्रुतिप्रामाण्यात् नैवं प्रसज्यते. शब्दैकप्रमाणकत्वाद्ब्रह्मस्वरूपस्य सकलेतरप्रमाणाऽवगतवस्तुविसजातीयत्वेन तत्रतत्राहष्टशक्तियोगो ब्रह्मणो न विरुद्धः; अतः कार्यत्वेन कारणत्वेन च परिपूर्णस्यैवावस्थानं सम्भवति. यथा जातिवादिनां जातेः खण्डमुण्डादिषु. ॥ २७ ॥

श्रीः ॥ आत्मनि चैवं विचित्राश्च हि॥ श्रीः २।१।२८॥

जीवात्मनि चाचिद्धर्मविरोधिधर्मयोगो विसजातीयशक्तित्वादेव. अग्निजलादयोऽप्यचिद्विशेषा अन्योन्यविलक्षणा नियतशक्तयो विचित्रा दृश्यन्ते. ॥ २८ ॥

श्रीः ॥ स्वपक्षदोषाच्च ॥ श्रीः २ । १ । २६ ॥

कृत्स्नप्रसक्त्यादिदोषो निरवयवेऽचिद्वस्तुसजातीये प्रधान एवेति ब्रह्मैव कारणम्. ॥ २६ ॥

श्रीः ॥ सर्वोपेता च तद्दर्शनात् ॥ श्रीः २।१।३०॥

"परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतेः सर्वशक्तियोगश्च देवताया अवगम्यते. ॥ ३० ॥

श्रीः ॥ विकरणत्वान्नेति चेत्तदुक्तम् ॥ श्रीः २।१।३१ ॥

"न तस्य कार्यं करणञ्च विद्यते" (क) इति ब्रह्मणो विकर-

---

(क) श्वे० ६।८

णत्वात्कारणत्वं नेति चेत्तस्योत्तरं शब्दैकमूलत्वेन विसजातीयत्वादिति पूर्वं सूत्रोक्तमेव ॥ ३१ ॥

❀श्रीः ॥ न प्रयोजनवत्त्वात् ॥ श्रीः २ । १ । ३२ ॥

"ब्रह्मणोऽवाप्तसमस्तकामत्वेन सृष्टौ प्रयोजनाभावाद् ब्रह्म न कारणम्. ॥ ३२ ॥

श्रीः ॥ लोकवत्तु लीलाकैवल्यम् ॥ श्रीः २।१।३३ ॥

अवाप्तसमस्तकामस्यापि लीलाप्रयोजनत्वे नैरपेक्ष्यं सम्भवति. लोके केवललीलायै कन्दुकाद्यारम्भदर्शनात् अस्यात्मतृप्तस्यावाप्तसमस्तकामत्वं हि सदाभिमतसकलभोगोपकरणसद्भावः, आत्मतृप्तेर्भोगतृप्तिर्विसजातीया. लीलारसस्यापि तद्विलक्षणस्य त्रिगुणपुरुषाद्युपकरण नित्यमेव. ॥ ३३ ॥

श्रीः ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि-
दर्शयति ॥ श्रीः २ । १ । ३४ ॥

देवादिविषम( १ )सृष्टेर्वैषम्यनैर्घृण्ये स्यातामिति चेन्न, कर्मापेक्षत्वा त्तथाहि "साधुकारी साधुर्भवति पापकारी पापोभवति (क) इति श्रुतिरेव दर्शयति ॥ ३४ ॥

श्रीः ॥ न कर्माविभागादिति चेन्नानादित्वादुपपद्यते
चाप्युपलभ्यते च ॥ श्रीः २ । १ । ३५ ॥

"सदेवसौम्येदमग्र आसीदेकमेव" इत्येकत्वावधारणात्तदानीं क्षेत्रज्ञाभावात्कर्म नभवतीति चेन्नानादित्वात् क्षेत्रज्ञानां तत्तत्कर्म-

---

( क ) बृह० ६ । ४ । १

( १ ) सृष्ट्यापक्षपातो नैर्घृण्यञ्च नसम्भवति परस्य क्षेत्रज्ञकर्मसापेक्षत्वात् तथाहि । इत्यधन्तैलङ्गपुस्तकपाठः ॥

प्रवाहश्चास्त्येव उपपद्यते च तदनादित्वे पर्याविभागश्रुतिर्नामरूपविभागाभावात् "तद्धेदन्तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते" इत्यनयैकार्थ्यादुपलभ्यते च श्रुतिषु क्षेत्रज्ञानादित्वं "ज्ञाज्ञौ द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानाम्" इति ॥ ३५ ॥

**श्रीः ॥ सर्वधर्मोपपत्तेश्च ॥ श्रीः २ । १ । ३६ ॥**

प्रधानपरमाण्वादिष्वनुपपन्नानां सर्वधर्माणां ब्रह्मणि सकलेतरविलक्षणत्वेन सर्वशक्तिश्रुत्याचोपपत्तेर्ब्रह्मैव कारणमिति सिद्धम् ॥ ३६ ॥ इति प्रयोजनवत्त्वाधिकरणम्

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे द्वितीयाध्यायस्य प्रथमः पाद ॥१॥

—:*]-*-[*:—

पादेऽस्मिन् सूत्राणि षट्त्रिंशत् ॥ ३६ ॥
अधिकरणानि च दश ॥ १० ॥

—⁐०:—०—:०⁐—

हरिःओम् । तत्सत्

———

श्रीकृष्णाय परब्रह्मणे नमः

द्वितीयाध्याये द्वितीयपादारम्भः ॥

—◡-*-*-*-◠—

❀श्रीः ॥ रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥
श्रीः २ । २ । १ ॥

दार्वादेरचेतनस्य रथप्रासादादिनिर्माणे तदभिज्ञानधिष्ठितस्य रचनानुपपत्तेश्च तज्ज्ञाधिष्ठितस्य रचनाप्रवृत्तेश्च नानुमानगम्यम् प्रधानमचेतनं प्राज्ञानधिष्ठितञ्जगत्कारणम्. ॥ १ ॥

श्रीः॥ पयोम्बुवच्चेत्तत्रापि॥ श्रीः २।२।२।

यथा पयोम्बु च दध्यादिभावेऽनपेक्षं, तद्वत्प्रधानमिति चेत्तत्राप्युक्त एव हेतुः, तस्याऽपि पक्षीकृतत्वात् ॥ २ ॥

श्रीः॥ व्यतिरेकाऽनवस्थितेश्चानपेक्षत्वात् ॥श्रीः२।२।३

प्राज्ञाधिष्ठितत्वानपेक्षत्वात् सर्वदा सृष्टिप्रसङ्गाच्च न प्रधानं कारणम्. ॥ ३ ॥

श्रीः ॥ अन्यत्राभावाच्च न तृणादिवत् ॥
श्रीः २ । २ । ४ ॥

क्षीरीभावे धेनूपभुक्ततृणादिवत् प्रधानमपीति न युक्तं वक्तुं (१) केवलतृणादिष्वदर्शनात् तद्धि प्राज्ञाधिष्ठितम् ॥ ४ ॥

श्रीः ॥ पुरुषाश्मवदिति चेत्तथापि॥ श्रीः २ । २ । ५ ।

पुरुषश्च स्वसन्निधानात्प्रधानं प्रवर्त्तयति अन्धपङ्गुपुरुषवत् अश्मवत् अयस्कान्ताश्मवदिति न प्राज्ञापेक्षेतिचेन्न, तथापि न

---

( १ ) अनुडुहादिष्विति तैलङ्गपुस्तकपाठः ॥

प्रधानप्रवृत्तिसम्भवः अविकृतत्वात् पुरुषस्य पंग्वश्मादेर्मार्गोपदेश-देशान्तरगमनादिः कादाचित्को विकारो ह्यस्ति ? ॥ ५ ॥

श्रीः ॥ अङ्गित्वानुपपत्तेश्च ॥ श्रीः २ । २ । ६ ॥

गुणानामुत्कर्षापकर्षरूपाङ्गाङ्गीभावाद्धि जगत्प्रवृतिः प्रतिसर्गा-वस्थायां साम्यावस्थानां वैषम्यकृताङ्गाङ्गित्वानुपपत्तेश्च, न जगदारम्भः. ॥ ६ ॥

श्रीः ॥ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥

श्रीः २ । २ । ७ ॥

ज्ञस्य या शक्तिस्तद्वियोगात् ज्ञातृत्वशक्तिवियोगादित्यर्थः उक्तप्रकाराद्व्यतिरिक्तप्रकारेण प्रधानानुमितौ च प्रधानस्य ज्ञत्व-शक्तिवियोगाद्रचनानुपपत्त्यादयो दोषास्तदवस्थाः ॥ ७ ॥

श्रीः ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ श्रीः २ । २ । ८ ॥

प्रधानाभ्युपगमेऽपि प्रयोजनाभावान्न तदनुमेयं. पुरुषस्य निर्वि-कारस्य प्रधानदर्शनादिरूपविकारासम्भवात्, प्रकृतिधर्माध्यास-निमित्तभोगस्तद्विवेकानुसन्धानकृतकैवल्यञ्च न सम्भवति. ॥ ८ ॥

श्रीः ॥ विप्रतिषेधाच्चासमञ्जसम् ॥ श्रीः २ । २ । ९ ॥

पुरुषस्य द्रष्टृत्वभोक्तृत्वनिर्विकारत्वादिविरुद्धसहस्राभ्युपग-माच्चासमञ्जसं कापिलमतम्. ॥ ९ ॥ इति रचनानुपपत्त्यधिकरणम्

❀श्रीः ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां ॥

श्रीः २ । २ । १०

असमञ्जसमित्यनुवर्तते. वाशब्दश्चार्थः. ह्रस्वपरिमण्डलाभ्यां-महद्दीर्घवत् द्व्यणुकत्र्यणुकोत्पत्तिवदन्यच्च तन्मतमसमञ्जसम्

अवयवाः स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानाः पृथुतरमवयाविनमारभन्ते परमाणूनां निरवयवत्वेन पार्श्वानभ्युपगमात् पार्श्वाननपेक्ष्य संयुज्यमानानां पृथुतरद्रव्यारम्भकत्वं न सम्भवति. ॥ १० ॥

## श्रीः ॥ उभयथापि न कर्मातस्तदभावः ॥

## श्रीः २ । २ । ११

अणुगताद्यकर्मासम्भवात्तत्कृताणुसंयोगाभावः क्षेत्रज्ञादृष्टानां विपाकापेक्षत्वेऽपि न तत्कृतकादाचित्काणुगतकर्मसम्भवः अनपेक्षत्वे प्रागप्युत्पादकं स्यात् विपाको नामादृष्टगतःकश्चिद्धर्मो न जायते. * कर्मविधिवेलायामेव कालविशेषनियतफलदायित्वं यस्य कर्मणश्चोदितं तस्य तत्कालागम एव विपाकः अनियतकालविशेषाणां कर्मणां प्रबलकर्मान्तरप्रतिबन्धाभाव एव विपाकः अदृष्टानि च तत्तत्कर्मानुगुणफलदानस्वभावानि; अतोऽनन्तैरात्मभिर्विविधकालफलदायित्वेनाऽनुष्ठितानामेकदैकरूपविपाको न सम्भवति. अनुमेयेश्वरासिद्धेस्तदधिष्ठानाच्च न सम्भवति. ॥ ११ ॥

## श्रीः ॥ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥

## श्रीः २ । २ । १२ ॥

समवायाभ्युपगमाच्चासमञ्जसं, समवायस्यापि जातिगुणादेरिवापृथक्सिद्धहेत्वपेक्षासाम्यादनवस्थितेः समवायस्य तत्स्वभावकल्पनायां जात्यादेरपि तद्वन्न्याय्यम. ॥ १२ ॥

## श्रीः ॥ नित्यमेवचभावात् ॥ श्रीः २ । २ । १३ ॥

समवायस्य नित्यत्वाभ्युपगमे च सम्बन्धिनित्यत्वमन्तरेण तदनुपपत्तेरवयवावयविनोरुभयोर्नित्यत्वप्रसङ्गादसदेवेदम ॥ १३ ॥

---

*ज्ञायते--तै०पा०

श्रीः ॥ रूपादिमत्त्वाच्च विपर्ययोदर्शनात् ॥

श्रीः २ । २ । १४ ॥

परमाणूनां रूपादिमत्त्वान्नित्यत्वादिविपर्ययश्च घटादिषु तथा दर्शनात् ॥ १४ ॥

श्रीः ॥ उभयथा च दोषात् ॥ श्रीः २ । २ । १५ ॥

अनित्यत्वादिभयात् रूपादिशून्यत्वे कारणगुणापूर्वकत्वासिद्धिस्तद्भयाद्रूपादिमत्त्वे चानित्यत्वादिरित्युभयथा च दोषादसमञ्जसमेव ॥ १५ ॥

श्रीः ॥ अपरिग्रहाच्चात्यन्तमनपेक्षा ॥

श्रीः २ । २ । १६ ॥

काणादपक्षे कस्याप्यंशस्य वैदिकैरपरिग्रहादनुपपन्नत्वाच्चात्यन्तमनपेक्षा. ॥ १६ ॥

❀श्रीः॥ समुदायउभय हेतुकेऽपि तदप्राप्तिः ॥

श्रीः ॥ २ । २ । १७ ॥

अणुहेतुके पृथिव्यादिसमुदाये पृथिव्यादिहेतुके शरीरेन्द्रियादिसमुदाये च, सुगताभ्युपगते तदभ्युपगमप्रकारेणैव समुदायासिद्धिः क्षणिकत्वं हि तैरभ्युपगम्यते संहतौ व्यापृता परमाणवः पृथिव्यादयश्च तदानीमेव नष्टाश्चेत्के समुदायरूपेण संहन्यन्ते॥१७॥

श्रीः॥ इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ श्रीः २ । २ । १८ ॥

अस्थिरेषु स्थिरत्वबुद्धिरूपाविद्याया रागद्वेषादिपरम्परायाः-

अन्योन्यकारणत्वात् सर्वकारणत्वमुपपन्नमितिचेन्न, अविद्यायाः सद्भातभावानिमित्तत्वान्न हि शुक्तिकादिषु रजतादिबुद्धिरूपाविद्यया शुक्तिकादिर्वस्तुतोरजतादिकार्यं करोति, अत्र विदुषस्तदानीमेव विनष्टत्वादविद्यानिमित्तरागादयो न सम्भवन्ति ॥ १८ ॥

**श्रीः ॥ उत्तरोत्पादे च पूर्वनिरोधात् ॥ श्रीः २।२।१९॥**

उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्यापि नष्टत्वेनाभावस्यैवोत्पादकत्वाविशेषेण सर्वदोत्पत्तिश्च स्यात् ॥ १९ ॥

**श्रीः ॥ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥**

**श्रीः २ । २ । २० ॥**

असत उत्पत्तावधिपतिसहकार्यादीनां ज्ञानहेतुत्वप्रतिज्ञाविरोधश्च. तस्यापिस्थित्यभ्युपगमे युगपद्घटद्वयोपलब्धिप्रसक्तिः अवस्थितौ च, संप्रयोगज्ञानापत्तेर्यौगपद्यम् ॥ २० ॥

**श्रीः ॥ प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ श्रीः २ । २ । २१ ॥**

प्रतिसंख्याप्रतिसंख्या ( १ ) निरोधोनिरन्वयविनाशः स स्थूलः सूक्ष्मश्च न संभवति, कपालादिभावरूपावस्थाप्राप्तेरेव विनाशशब्दाभिधेयत्वात् सतोद्रव्यस्याविच्छेदात् ॥ २१ ॥

**श्रीः ॥ उभयथा च दोषात् ॥ श्रीः २ । २ । २२ ॥**

उत्पन्नस्य तुच्छतापत्तौ तुच्छादुत्पत्तौ च(२)पश्चादुत्पद्यमानं जग-

---

( १ ) इत्यन्तः पाठोनान्ध्रपुस्तकेऽस्ति ॥

( २ ) उत्पत्तौ चेत्यनन्तरम् (अभावादुत्पत्त्यसम्भवात्) इत्यधिकमान्ध्रपुस्तके ॥

तुच्छात्मकं स्यात्. मृदादेरुत्पद्यमानघटादेर्मृदाद्यात्मवत्, अतोऽभावात्मककार्योत्पत्तिरूपदोषान्न तुच्छत्वसिद्धिः ॥ २२ ॥

श्रीः ॥ आकाशे चाविशेषात् ॥ श्रीः २ । २ । २३ ॥

आकाशे च न तुच्छत्वम् अबाधितप्रतीत्यविशेषात् प्रतीयते ह्याकाशः श्येनादिपतन (१) देशत्वेन ? ॥ २३ ॥

श्रीः ॥ अनुस्मृतेश्च ॥ श्रीः २ । २ । २४ ॥

प्रत्यभिज्ञानाच्च न क्षणिकत्वसिद्धिः तदेवेदमिति हि सामानाधिकरण्येनाऽतीतवर्तमानदेशकालविशिष्टवस्त्वेकमिति प्रतीयते. तस्याश्च सामग्री पूर्वाऽनुभवजनितसंस्कारवतः पुरुषस्येन्द्रियसंयोगः. ॥ २४ ॥

श्रीः ॥ नासतोदृष्टत्वात् ॥ श्रीः २ । २ । २५ ॥

ज्ञानाकारवैचित्र्येण ज्ञाने स्वाकारं समर्प्य विनष्टमप्यर्थमनुमिनोतीति वादश्च न सम्भवति,असतो विनष्टस्य धर्मिणो धर्मसङ्क्रमणस्यादृष्टत्वात्.ज्ञाने नीलाद्याकार उपलभ्यते स विनष्टः। असतोऽर्थस्याकारो भवितुं नार्हति कुतः? अदृष्टत्वात् न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे सङ्क्रमणन्दृष्टम् ॥ २५ ॥

श्रीः ॥ उदासीनानामपि चैवं सिद्धिः ॥

श्रीः २ । २ । २६ ॥

क्षणिकत्वाभ्युपगमे, अनुष्ठातुरन्यत्वात् फलिनां निष्प्रयत्नानामपि सर्वार्थसिद्धिः स्यात् ॥ २६ ॥

---

( १ ) हेतुत्वेन ? इतितै० पु० पाठः ॥

❀श्री ॥ नाभाव उपलब्धेः॥ श्रीः २ । २ । २७ ॥

ज्ञानव्यतिरिक्तार्थाभाववादश्च, न सम्भवति. घटमहं जानामीति कर्तृकर्मकमेतदर्थस्योपलब्धेर्न तदभावः शक्यते वक्तुं. पुरुषस्यार्थविशेषव्यवहारानुगुण्यापादकत्वमेव ज्ञानस्याकारः ॥ २७ ॥

श्रीः ॥ वैधर्म्याच्च न स्वप्नादिवत् ॥ श्रीः २।२।२८॥

करणदोषजबाधकप्रत्ययराहित्यरूपवैधर्म्याच्च न स्वप्नादिवज्जागरितज्ञानस्य मिथ्यात्वम् ॥ २८ ॥

श्रीः ॥ न भावोऽनुपलब्धेः ॥ श्रीः २ । २ । २९ ॥

क्षणिकत्वाच्च (क) अर्थशून्यस्य ज्ञानस्य सद्भावो न सम्भवति अनुपलब्धेः । स्वप्नज्ञानस्याप्यर्थवत्तोपपादयिष्यते. ॥ २९ ॥

इत्युपलब्ध्यधिकरणम् ।

❀श्रीः ॥ सर्वथानुपपत्तेश्च ॥ श्रीः २ । २ । ३० ॥

सर्वशून्यवादश्च न सम्भवति, सदिति प्रतिज्ञायामसदिति प्रतिज्ञायाश्च तुच्छता न सम्भवति, अनुपपत्तेः सदसद्बुद्धितुच्छत्वादीनां वस्तुगतान्योन्यविरुद्धरूपावस्थाविशेषविषयत्वात्. ॥ ३० ॥

इति सर्वथाऽनुपपत्त्यधिकरणम् ।

❀श्रीः ॥ नैकस्मिन्नसम्भवात् ॥ श्रीः २ । २ । ३१ ॥

अर्हतोमतं न युक्तिमत्. एकस्मिन् वस्तुनि युगपत्सत्त्वासत्त्वनित्यत्वानित्यत्वभेदाभेदानामसम्भवात्, पर्यायरूपाश्च द्रव्यस्यास्तित्वादिशब्दबुद्धिविषयाः परस्परविरुद्धपिण्डत्वघटत्वकपालत्वाद्यवस्था युगपन्न सम्भवन्ति.तथा घटत्वशरावत्वाद्यवस्थाश्च पृथिव्यादेः प्रदेशभेदेन, तथा च द्रव्यस्यानित्यत्वमुत्पत्तिविनाशयोगित्वं तद्विपरीतं नित्यत्वं नैकस्मिन्समवैति. ॥ ३१ ॥

---

( क ) क्षणिकत्वाच्च' इत्यधिकन्देवाक्षर (क) पुस्तके ॥

श्रीः ॥ एवञ्चात्माकार्त्स्न्यम् ॥ श्रीः २ । २ । ३२ ॥

एवञ्चात्मनः शरीरपरिमाणत्वे बृहतः शरीरादल्पीयश्शरीरे प्रविशतः कार्त्स्न्यविकलत्वं प्रसज्येत. ॥ ३२ ॥

श्रीः ॥ न च पर्यायादप्यविरोधोविकारादिभ्यः ॥

श्रीः २ । २ । ३३ ॥

तथा सङ्कोचविकासावस्थायोगादपि नाऽविरोध,: घटादिव-द्विकारादियोगप्रसक्तेः ॥ ३३ ॥

श्रीः ॥ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥

श्रीः २ । २ । ३४ ॥

अन्त्यस्य मोक्षावस्थपरिमाणस्यैकरूपावस्थितेस्तस्य स्वाभा-विकत्वेनात्मतत्परिमाणयो रुभयोर्नित्यत्वेन पूर्वत्राप्यविशेषः. त्रि-विधदेहपरिमाणत्वे वैकल्यं स्यादेव. ॥ ३४ ॥

इत्येकस्मिन्नसम्भवाधिकरणम्

❀श्रीः ॥ पत्युरसामञ्जस्यात् ॥ श्रीः २ । २ । ३५ ॥

नेत्यनुवर्तते पत्युर्मत (१) मनादरणीयं वेदविरुद्धजगन्निमित्तो-पादानभेदतद्विरुद्धाचारपरत्वेनाऽसामञ्जस्यात् ॥ ३५ ॥

श्रीः ॥ अधिष्ठानाऽनुपपत्तेश्च ॥ श्रीः २ । २ । ३६ ॥

अनुमेयेश्वराभ्युपगमेन हि केवलाधिष्ठातृत्वमुच्यते ? तथा सत्य-शरीरस्य प्रधानाधिष्ठानानुपपत्तेः सशरीरत्वे तच्छरीरोत्पत्त्यनिरूप-णात्सावयवस्य तस्य नित्यत्वे, महीमहार्णवादेरपि ( २ ) नित्यत्वा विरोधाच्च. ॥ ३६ ॥

---

( १ ) पशुपतेर्मतमितिते० पु० पा०

( २ ) मही महीधरादीनामपि' इतिते० पु० पा०

श्रीः ॥ करणवच्चेत् न भोगादिभ्यः ॥

श्रीः २ । २ । ३७ ॥

करणकलेवराद्यधिष्ठानवदशरीरस्यैवाधिष्ठानमिति चेन्न, पुण्य पापनिमित्तत्वात्तस्य फलभोगादिप्रसक्तिः ॥ ३७ ॥

श्रीः ॥ अन्तवत्त्वमसर्वज्ञता वा ॥ श्रीः २ । २ । ३८ ॥

तथा सति क्षेत्रज्ञवदन्तवत्त्वमसर्वज्ञता च स्यात्. ॥ ३८ ॥

❀श्रीः ॥ उत्पत्त्यसम्भवात्॥ श्रीः २ । २ । ३९॥

साङ्ख्यादिवत्पञ्चरात्रमपि जीवोत्पत्त्यभिधानात्' श्रुतिविरुद्ध-त्वेन तदसम्भवादप्रमाणम्. ॥ ३९ ॥

श्रीः ॥ न च कर्तुः करणम् ॥ २ । २ । ४० ॥

कर्तुर्जीवात्करणम् मनश्च (१) नोत्पद्यते "एतस्माज्जायते प्राणो-मनस्सर्वेन्द्रियाणि च" इत्यादिश्रुतेः ॥ ४० ॥

श्रीः ॥ विज्ञानादिभावे वा तदप्रतिषेधः ॥

श्रीः २ । २ । ४१ ॥

"वासुदेवात्सङ्कर्षणोनामजीवः"(ख)इत्यादौ सङ्कर्षणादीनां विज्ञानादिरूपवासुदेवत्वेसति, तदभिधायिनः प्रामाण्याऽप्रतिषेधः पर-ब्रह्मभूतवासुदेवस्य हि श्रुतावपि "अजायमानो बहुधा विजायते" इतीच्छावतारः श्रूयते. जीवादिशब्दास्तच्छरीरसङ्कर्षणादीनां वाचकाः ॥ ४१ ॥

---

( १ ) मनश्चेत्यनन्तरं श्रुतावुत्पद्यते' इत्यान्ध्रपुस्तके ॥

( ख ) पञ्चरात्रे ॥

श्रीः॥ विप्रतिषेधाच्च॥ श्रीः २ । २ । ४२ ॥

तस्मिन्नपि तन्त्रे व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च सद्यनादिरनन्तश्चेति, जीवोत्पत्तिप्रतिषेधाच्च न विरोधः श्रुतितः. ॥ ४२ ॥ इत्युत्पत्त्यसम्भवाधिकरणम्

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते
श्रीमति वेदान्तसारे द्वितीयाध्यायस्य,
द्वितीयः पादः ॥ २ ॥

—:०:—

पादेऽस्मिन् सूत्राणि द्विचत्वारिंशत् ॥ ४२ ॥
अधिकरणान्यष्टौ ॥ ८ ॥
हरिः ओम् तत्सत्

—*:*:*—

श्रीमन्निगमान्तमहादेशिका-
एवमभिदधते

कपर्दिमतकर्दमं कपिलकल्पनावागुराम् ।
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ॥
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः ।
करग्रहविचक्षणो जयति लक्ष्मणोऽयम्मुनिः ॥

श्रीकृष्णाय परब्रह्मणे नमः

तृतीयाध्याये तृतीयपादारम्भः ॥

—‿*-*-*‿—

❀श्रीः ॥ न वियदश्रुतेः ॥ श्रीः २ । ३ । १ ॥

वियन्नोत्पद्यते अश्रुतेः श्रुतिः श्रवणं निरवयवस्यात्मन इवोत्पत्तिश्रवणासम्भवात् ॥ १ ॥

श्रीः ॥ अस्ति तु ॥ श्रीः २ । ३ । २ ।

श्रवणं सम्भवत्येव "आकाशः सम्भूतः" इति हि श्रुतिरतीन्द्रियार्थविषया वियदुत्पत्तिं प्रतिपादयति. आत्मनोऽपि "न जायते म्रियते वा विपश्चित्" इति प्रतिषेधादनुत्पत्तिः ॥ २ ॥

श्रीः ॥ गौण्यसम्भवाच्छब्दाच्च ॥ श्रीः २ । ३ । ३॥

"तत्तेजोऽसृजत" ( क ) इति तेजःप्राथम्यवचनात् "आकाशः-सम्भूतः" इति श्रुतिर्गौणी "वायुश्चान्तरिक्षश्चैतदमृतम्" ( ख ) इति शब्दाच्च ॥ ३ ॥

श्रीः ॥ स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २ । ३ । ४ ॥

एकस्य सम्भूतशब्दस्याकाशे गौणत्वमन्यत्रमुख्यत्वमनुषङ्गे सम्भवत्येव श्रवणावृत्तिवत्. यथैकस्य ब्रह्मशब्दस्य "तस्मादेतद्ब्रह्म-नामरूपमन्नञ्च जायते" इति प्रकृतौ गौणत्वं "तपसा चीयते ब्रह्म" इति मुख्यत्वमावृत्तौ" ॥ ४ ॥

परिहरति—

---

( क ) छा० ६ । २ । ३

( ख )

**श्रीः॥ प्रतिज्ञाऽहानिरव्यतिरेकात् ॥श्रीः २।३।५॥**

"येनाश्रुतं श्रुतम्" इत्यादिना एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानिर्वियदादेर्ब्रह्मकार्यत्वेन तदव्यतिरेकादेव. ॥ ५ ॥

**श्रीः ॥ शब्देभ्यः ॥ श्रीः २ । ३ । ६ ॥**

"आकाशः सम्भूतः" इत्यादिशब्देभ्योऽवगतां वियदुत्पत्तिम् "तत्तेजोऽसृजत" इत्यादिवचनाऽवगततेजःप्राथम्यं न निवारयितुं क्षमम् ॥ ६ ॥

**श्रीः ॥ यावद्विकारन्तु विभागोलोकवत् ॥**

**श्रीः २ । ३ । ७ ॥**

"ऐतदात्म्यमिदं सर्वम्" (क) इत्यादिनाकाशादेरपि विकारत्वाऽवगमात् तेजःप्रभृतिविकारवचनं सर्वस्य प्रदर्शनार्थमिति निश्चीयते. यथा लोके 'दश इमे देवदत्तस्य पुत्राः' इत्युक्त्वा तेषु केषाञ्चिदुत्पत्तिवचनम्. ॥ ७ ॥

**श्रीः ॥ एतेन मातरिश्वा व्याख्यातः ॥ श्रीः २।३।८॥**

'तेजोऽतः' इति वक्तुं वायोः पृथगुपादानम् ॥ ८ ॥

**श्रीः॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ श्रीः २।३।९॥**

असम्भवस्तु परस्य ब्रह्मण एव, इतरस्य सदेवेत्यवधारणाद्यनुपपत्तेरुत्पत्तिरेव ॥ ९ ॥

आकाशादिवत् व्यवहितकार्याणामपि साक्षाद्ब्रह्मण उत्पत्तिं वक्तुं पूर्वपक्षमाह—

---

( क ) छा० ६ । २ । १

❀श्रीः॥ तेजोऽतस्तथा ह्याह॥ श्रीः २ । ३ । १० ॥

तेजो वायोरेवोत्पद्यते न साक्षाद्ब्रह्मणः "वायोरग्निः" इत्याह ॥ १० ॥

श्रीः ॥ आपः ॥ श्रीः २ । ३ । ११ ॥

"अग्नेरापः" इति श्रुतेरापोऽग्नेः ॥ ११ ॥

श्रीः॥ पृथिवी ॥ श्रीः २ । ३ । १२ ॥

"अद्भ्यः पृथिवी" इति श्रुतेः पृथिव्यद्भ्यः ॥ १२ ॥

श्रीः ॥ अधिकाररूपशब्दान्तरेभ्यः ॥ श्रीः २।३।१३॥

"ता अन्नमसृजन्त" ( क ) इत्यन्नशब्देन पृथिव्येवाभिधीयते भूतसृष्ट्यधिकारात् "यत्कृष्णं तदन्नस्य" ( ख ) इति पृथिवीरूपविधानात् "अद्भ्यः पृथिवी" इति पृथिवीशब्दाभिधानाच्च. ॥ १३ ॥

राद्धान्तमाह—

श्रीः ॥ तदभिध्यानादेव तु तल्लिङ्गात्सः ॥

श्रीः २ । ३ । १४ ॥

"तत्तेज ऐक्षत" "ता आप ऐक्षन्त इति तदभिध्यानरूपात् "तदैक्षत बहुस्याम" इत्येतत्सरूपात् परमात्मकारणत्वलिङ्गात्स एव परमात्मा, तेजःप्रभृतिशरीरकस्तत्तच्छब्दैः साक्षात्कारणत्वेनाऽभिधीयते. ॥ १४ ॥

---

( क ) छा० ६ । ४ । १

( ख ) छा० ६ । २ । ३

श्रीः ॥ विपर्ययेणतु क्रमोऽतउपपद्यते च ॥

श्रीः २ । ३ । १५ ॥

पारम्पर्यक्रमात् विपर्ययेण "एतस्माज्जायते प्राणः.... खं वायुः" इत्यादिवाक्याद्यः साक्षाद्ब्रह्मणः सृष्टेरुपक्रमः ( १ ) सोऽयतस्तेजः प्रभृति शरीरकब्रह्मण एव सृष्टेरुपपद्यते. ॥ १५ ॥

श्रीः ॥ अन्तराविज्ञानमनसी क्रमेण तल्लिङ्गादिति-

चेन्नाविशेषात् ॥ श्रीः २ । ३ । १६ ॥

भूतप्राणयोरन्तराले 'इन्द्रियग्राममनसी, क्रमेणोत्पद्येते इत्येतत्परमिदम् वाक्यम् "खं वायुर्ज्योतिरापः" इत्यादिश्रुतिक्रम-प्रत्यभिज्ञानरूपाल्लिङ्गादत इदमपि पारम्पर्यक्रमपरमितिचेन्न, "एतस्माज्जायते" इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्ये-कमन्वयाविशेषात्. अतस्तेजःप्रभृतीनामपिसाक्षात्परमात्मैव कारणम् ॥ १६ ॥

"तत्तेज ऐक्षत" इति तेजःप्रभृतिशब्दाः लोके तत्तद्वस्तुवाचिनो ब्रह्मणि भाक्ता इत्यत्राह--

श्रीः ॥ चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोऽभाक्त-

स्तद्भावभावित्वात् ॥ श्रीः २ । ३ । १७ ॥

चराचरवस्तुसम्बन्धी तत्तद्वाची शब्दोब्रह्मण्यभाक्तोमुख्य एव "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति सर्व-स्य वस्तुनोनामरूपभागित्वाय*आत्मतया ब्रह्मानुप्रवेशः भावभा-वित्वात् लौकिकास्त्वेवमजानन्तोवाच्यैकदेशे प्रयुञ्जते. ॥ १७ ॥

---

( १ ) सृष्टिरुपक्रमः, इति तै० पुस्तके ॥

* नामरूपभाक्त्वायेति' तै०पा०

❀श्रीः ॥ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥

श्रीः २ । ३ । १८ ॥

नात्मोत्पद्यते "न जायते म्रियते" इतिश्रुतेः "नित्योनित्याना- श्चेतनश्चेतनानाम्" इत्यादिश्रुतिभ्यो नित्यत्वावगतेश्च. ॥ १८ ॥

इत्यात्माधिकरणम्

❀श्रीः ॥ ज्ञोऽतएव ॥ श्रीः २ । ३ । १९ ॥

"अथ यो वेदेदञ्जिघ्राणीति स आत्मा मनसैवैतान् कामान् पश्यन् रमते" ( क ) "य एते ब्रह्मलोके" ( ख ) इत्यादिश्रुतेः बद्धोमुक्तश्चात्मा ज्ञातैव. "मनोस्य दैवञ्चक्षुः" ( ग ) इतिश्रुतेः- स्वधर्मभूतं ज्ञानम्मनः ॥ १९ ॥

श्रीः ॥ उत्क्रान्तिगत्यागतीनाम् ॥ श्रीः २ । ३ । २० ॥

उत्क्रान्त्यादीनां श्रुतेरणुर्जीवः ॥ २० ॥

श्रीः ॥ स्वात्मना चोत्तरयोः ॥ श्रीः २ । ३ । २१ ॥

गत्यागत्योः स्वात्मनैवसम्पाद्यत्वादप्यणुत्वं निश्चितम् ॥ २१ ॥

श्रीः ॥ नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥

श्रीः २ । ३ । २२ ॥

"स वा एष महानज आत्मा" ( घ ) इति श्रुतेर्नाणुरितिचेन्न. "यस्यानुवित्तः प्रतिबुद्ध आत्मा" (ङ) इति परात्माधिकारात्. ॥२२॥

---

( क ) छा० ८ । ४ । १२
( ख ) छा० ८ । ४ । १
( ग )
( घ ) बृ० ६ । ४ । २४
( ङ ) बृ० ६ । ४ । २५

श्रीः ॥ स्वशब्दोन्मानाभ्यां च ॥ श्रीः २ । ३ । २३ ॥

"एषोऽणुरात्मा" ( क ) इत्यणुशब्दात् "आराग्रमात्रोह्यवरः" ( ख ) इत्युद्धृत्य उन्मानशब्दाच्चाणुः ॥ २३ ॥

अणोरपि सकलदेहव्यापिवेदनानुभवे, अन्यमतेन हेतुमाह--

श्री ॥ अविरोधश्चन्दनवत् ॥ श्रीः २ । ३ । २४ ॥

यथा चन्दनबिन्दुरेकदेशस्थितोऽपि सकलदेहव्यापि सुखं जनयति तद्वदविरोधः ॥ २४ ॥

श्रीः ॥ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ श्रीः २ । ३ २५ ॥

देशविशेषस्थितेश्चन्दनस्येति चेन्न, आत्मनोपि तदभ्युपगमात् "हृदि ह्ययमात्मा" (ग) "योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः" ( घ ) इति श्रुतेः ॥ २५ ॥

स्वमतेनाह—

श्रीः ॥ गुणाद्वाऽऽलोकवत् ॥ श्रीः २ । ३ । २६ ॥

आत्मा स्वगुणेन ज्ञानेन सकलदेहं तथानुभवति यथा मणि-प्रभृतयः स्वकीयेनालोकेन सकलदेशं व्याप्य प्रकाशयन्ति. "प्रज्ञा-मात्रास्वर्पिताः,, (ङ) इति श्रुतेः ॥ २६ ॥

ज्ञानात्मनोर्व्यतिरेक इत्यतआह—

---

( क ) वृ० ६ । ४ । २५
( ख )
( ग )
( घ )
( ङ ) कौ० ३ । ८

श्रीः ॥ व्यतिरेको गन्धवत् तथा च दर्शयति ॥

श्रीः २ । ३ । २७ ॥

गन्धवती पृथवीतिवज्ज्ञानामीति गुणवत्त्वेनोपलब्धेर्व्यतिरेकोस्ति दर्शयति च श्रुतिर्व्यतिरेकम् "जानात्येवायं पुरुषः,, (क) इति ॥ २७ ॥

श्रीः ॥ पृथगुपदेशात् ॥ श्रीः २ । ३ । २८ ॥

आत्मनः पृथक्त्वेन चोपदिश्यते ज्ञानम् "न हि विज्ञातुर्विज्ञातेर्विपरि लोपोविद्यते" (ख) इति ॥ २८ ॥

"योऽयम् विज्ञानमयः" इति ज्ञानमात्रव्यपदेशः कथम् ? इतिचेत् तत्राह—

श्रीः ॥ तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् ॥

श्रीः २ । ३ । २९ ॥

ज्ञानगुणसारत्वादात्मनोज्ञानमिति व्यपदेशः यथा प्राज्ञस्य विपश्चितोऽपि 'सत्यं ज्ञानम्' इति. ॥ २९ ॥

श्रीः ॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥

श्रीः २ । ३ । ३० ॥

आत्मस्वरूपानुबन्धित्वाज्ज्ञानस्य तेन व्यपदेशो न दोषः स्वरूपाऽनुबन्धिधर्मत्वेन गोत्वादीनां खण्डादेर्गौरित्यादिव्यपदेशो हि दृश्यते ॥ ३० ॥

---

( क ) तै० ५ । १

( ख ) बृ० ६ । ३०

सुषुप्त्यादिष्वसतोज्ञानस्य यावदात्मभावित्वं कथमित्यत्राह—

श्रीः ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥

श्रीः २ । ३ । ३१ ॥

सुषुप्त्यादिषु सतो ज्ञानस्याऽनभिव्यक्तस्यापि जागरादावभिव्यक्तिसम्भवात्स्वरूपानुबन्ध्येव ज्ञानम् यथा पुंस्त्वासाधारणसप्तमधातोर्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः, जीवात्मनोज्ञातृत्वमणुत्वञ्चोक्तम् ॥ ३१ ॥

श्रीः ॥ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो-

वान्यथा ॥ श्रीः २ । ३ । ३२ ॥

अन्यथा ज्ञप्तिमात्रसर्वगतात्मवादे, तावन्नित्यत्वात्सर्वदैवोपलब्धिः स्यात्सङ्कोचकाभावात् विद्यमानाया अनुपलब्धेरपि सैव हेतुरिति सापि नित्यवत्स्यात् ज्ञाने विद्यमाने हेत्वन्तरेण निवारणासम्भवात् आगन्तुकज्ञानसर्वगतात्मवादेऽपि स एव दोषः, सर्वात्मनां सर्वगतत्वेन ज्ञानहेतूनां मनःसंयोगादीनां सर्वसाधारणत्वात् अदृष्टहेतूनामपि सर्वसाधारणत्वोक्त्यातेनापि न नियमः यथोपलब्ध्यनुपलब्ध्योर्विरोधात्सूपलब्धेर्वैते हेतवस्युरनुपलब्धेर्वा; तथासत्यन्यतरनियमः स्यात् ॥ ३२ ॥

श्रीः ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ श्रीः २ । ३ । ३३ ॥

ज्ञातासन्नयमात्मा कर्मसु कर्ता, च आत्मनोऽकर्तृत्वे कुर्यान्न कुर्यादिति शास्त्रानर्थक्यं स्यात् ३३ ।

श्रीः ॥ उपादानाद्विहारोपदेशाच्च ॥ श्रीः २ । ३ । ३४ ॥

स कर्ता "प्राणान् गृहीत्वा स्वे शरीरे यथा कामं परिवर्तते" इत्युपादानविहारोपदेशाच्चेति ॥ ३४ ॥

श्रीः ॥ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥

श्रीः २ । ३ । ३५ ॥

"विज्ञानं यज्ञं तनुते" इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्च कर्ता, विज्ञानशब्दवाच्या बुद्धिर्नात्मेतिचेन्न, तदा विज्ञानेनेतिनिर्देशविपर्ययः स्यात् बुद्धेः करणत्वात् ॥ ३५ ॥

श्रीः ॥ उपलब्धिवदनियमः ॥ श्रीः २ । ३ । ३६ ॥

प्रकृतेरेव कर्तृत्वे तस्याः सर्वसाधारणत्वेन पूर्वोक्तोपलब्ध्यनुपलब्ध्यनियमवत् फलानियमः स्यात् ॥ ३६ ॥

श्रीः ॥ शक्तिविपर्ययात् ॥ श्रीः २ । ३ । ३७ ॥

प्रकृतेरेव कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यादित्यर्थः ॥ ३७ ॥

श्रीः ॥ समाध्यभावाच्च ॥ श्रीः २ । ३ । ३८ ॥

प्रकृतेरेव कर्तृत्वे " प्रकृतेरन्योऽस्मि" इति समाध्यभावप्रसङ्गाच्च ॥ ३८ ॥

श्रीः ॥ यथा च तक्षोभयथा ॥ श्रीः २ । ३ । ३९ ॥

आत्मनः कर्तृत्वे इच्छायां करोत्यन्यथा न करोतीति व्यवस्था च सिध्यति, यथा तक्षास्वकार्ये बुद्धेरिच्छाभावान्न व्यवस्था चेतनधर्मत्वादिच्छायाः ॥ ३९ ॥

❀श्रीः ॥ परात्तु तच्छ्रुतेः ॥ श्रीः २ । ३ । ४० ॥

" य आत्मानमन्तरोयमयति" इति श्रुतेरात्मनः कर्तृत्वं परायत्तम "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" इत्यादिस्मृतेश्च ॥ ४० ॥

श्री: ॥ कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-द्भिभ्य: ॥ श्री: २ । । ४१ ॥

जीव: स्वेच्छया प्रवृत्तिनिवृत्तिहेतुभूतं प्रयत्नं करोति जीवेन कृतं प्रयत्नं प्रथमप्रवृतिहेतुमपेक्ष्य तदनुमतिदानेन पर: प्रवर्तयतीति तद्वि धिनिषेधाऽवैयर्थ्यनिग्रहानुग्रहेभ्योऽवगम्यते. यथा गुरुतरदार्वादि भरणमबल: प्रबलप्रयत्नसहकृतं कुर्वन्नपि स्वप्रयत्नेन विधिनिषेध योग्योभवति एवमेव जीव: परमपुरुषाऽनुमतिसहकृत: प्रवर्तमानो-विधिनिषेधयोग्य इति, न कश्चिद्विरोध: । ४० ॥

॥ इति परायत्ताधिकरणम् ॥

❀श्री: ॥ अंशोनानाव्यपदेशादन्यथा चापिदाश-कितवादित्वमधीयत एके ॥ श्री: २ । ३ । ४२ ॥

जीवात्मा परमपुरुषांश: "पृथगात्मानं प्रेरितारञ्च मत्वा" "स कारणं करणाधिपाधिप:" इत्यादि नानाव्यपदेशादन्यथा "तत्त्वमस्ययमात्मा ब्रह्म" इत्यात्मैकत्वोपदेशाच्च 'ब्रह्मदाशा:' इत्यादि सर्वजीवव्याप्त्यैकत्वमधीयत एके अंशत्वे ह्युभयं मुख्यं भवति ॥४२॥

श्री: ॥ मन्त्रवर्णात् ॥ श्री २ । ३ । ४३ ॥

"पादोऽस्य विश्वाभूतानि" इति मन्त्रवर्णाच्च ॥ ४३ ॥

श्री: ॥ अपि स्मर्यते ॥ श्री: २ । ३ । ४४ ॥

"ममैवांशो जीवलोके जीवभूत: सनातन:" इत्यादिना ॥ ४४ ॥

श्री:॥प्रकाशादिवत्तु नैवम् पर: ॥ श्री: २ । ३ । ४५ ॥

ब्रह्मांशत्वेपि जीवस्य जीवो यत्स्वरूपो यत्स्वभावश्च नैवम्

परः निरवद्यः सर्वज्ञः सत्यसङ्कल्प एकः सर्वदा कथं प्रकाशादिवत् प्रकाशविशिष्टानां मणिप्रभृतीनां प्रकाशः ? विशिष्टैकदेशत्वेन यथांशः, आदिशब्दाद्विशेषणतैकस्वभावजातिगुणशरीराणि गृह्यन्ते. विशेषणानां विशिष्टैकदेशतया तदंशत्वेपि विशेषणविशेष्ययोःस्वरूपस्वभावभेदो न विरुद्धः "यः आत्मनि तिष्ठन् यस्यात्माशरीरम् "इति हि श्रुतिः ? ॥ ४५ ॥

श्रीः ॥ स्मरन्ति च ॥ श्रीः २ । ३ । ४६ ॥

चिदचिदात्मकस्य जगतो ब्रह्मांशत्वं प्रकाशादिवदिति पराशरादयः स्मरन्ति. "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥ परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् " "तत्सर्वं वै हरेस्तनुः" " तानि सर्वाणि तद्वपुः" इत्यादिषु ॥ ४६ ॥

श्रीः ॥ अनुज्ञापरिहारौ देहसम्बन्धाज्ज्यो-तिरादिवत् ॥ श्रीः २ । ३ । ४७ ॥

ब्रह्मांशत्वेपि सर्वजीवानां कस्यचिद्वेदादावनुज्ञा कस्याचित्परिहार इत्येतौ ब्राह्मणादिदेहविशेषसम्बन्धादुपपद्येते, यथाग्न्यादेः श्रोत्रियागारश्मशानादिसम्बन्धात् ॥ ४७ ॥

श्रीः ॥ असन्ततेश्चाऽव्यतिकरः श्रीः॥ २ । ३ । ४८ ॥

प्रतिदेहं भिन्नत्वादणुत्वेन तत्र तत्राऽपरिच्छिन्नत्वाच्च ज्ञानसुखादावव्यतिकरः, अज्ञानोपाधिभ्यां ब्रह्मैव सम्बध्यते इति पक्षद्वयेपि न तत्तद्व्यवस्था जलसूर्यवत्. ॥ ४८ ॥

श्रीः॥ आभासा एवच ॥ श्रीः २ । ३ । ४९ ॥

पक्षद्वयेऽपि हेतवश्चाभासाः ॥ ४९ ॥

श्रीः ॥ अदृष्टानियमात् ॥ श्रीः २ । ३ । ५० ॥

सत्यमिथ्योपाधिकृतत्वेऽप्यात्मनां ब्रह्मण एवाज्ञानमुपाधिश्चेति तत्तत्कृतेनादृष्टादिनापि नाऽनियमः ॥ ५० ॥

श्रीः ॥ अभिसन्ध्यादिष्वपि चैवम् ॥ श्रीः २।३।५१

अदृष्टहेतुभूताभिसन्ध्यादिष्वपि चैवमेव. ॥ ५१ ॥

श्रीः ॥ प्रदेशभेदादिति चेन्नान्तर्भावात्॥ श्रीः२।३।५२

उपाधिसम्बन्धिब्रह्मप्रदेशभेदाद्व्यवस्थितिश्चेन्न, * उपाधिषु गच्छत्सु सर्वप्रदेशानामन्तर्भावात्. ॥ ५२ ॥

॥ इत्यंशाधिकरणम् ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति वेदान्तसारे द्वितीयध्यायस्य तृतीयः पादः ॥ ३ ॥

———*———

पादेऽस्मिन् सूत्राणि द्विपञ्चाशत् ॥ ५२ ॥

अधिकरणानि च सप्त ॥ ७ ॥

हरिः ओ३म् तत्सत्

—:०:—

* व्यवस्था इति चेत् उपाधीत्वस्यादितै० पा०

श्रीहयवदनपरब्रह्मणे नमः ॥

—*–*–*–*—

द्वितीयाऽध्याये चतुर्थपादारम्भः ॥

——*:*:*——

## ❁श्रीः ॥ तथा प्राणाः ॥ श्रीः २ । ४ । १ ॥

यथा जीवोत्पत्तिर्नित्यत्वश्रुतेर्नोपपद्यते तथा इन्द्रियाण्यपि "असद्वा इदमग्र आसीत्...ऋषयो वाव तेऽग्रेसदासीत्...प्राणा वाव ऋषयः" (क) इति प्रलयकाले प्राणानां स्थित्युपदेशात्. ॥१॥

नैवम्—

## श्रीः॥ गौण्यसम्भवात्तत्प्राक्श्रुतेश्च ॥ श्रीः २ । ४ । २

तस्य परमात्मन एव सृष्टेः प्रागवस्थानश्रुतेः ऋषिशब्दः प्राणशब्दश्च परमात्मन्येव. बहुत्वासम्भवात् बहुवचनश्रुतिर्गौणी. ॥२॥

## श्रीः ॥ तत्पूर्वकत्वाद्वाचः ॥ श्रीः २ । ४ । ३

परमात्मनः सृष्टिपूर्वकत्वादितरेषां नामयोगस्य. तदानीं प्राणशब्दो नेन्द्रियविषयः ॥ ३ ॥

॥ इति इति प्राणोत्पत्त्यधिकरणम् ॥

## ❁श्रीः ॥ सप्तगतेर्विशेषितत्वाच्च ॥ श्रीः २ । ४ । ४

"सप्तैवेन्द्रियाणि सप्त प्राणाः"(ख)"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह, बुद्धिश्च" ( ग ) इति सप्तानामेव ग्रहणात् तेषामेव योगे विशेषितत्वाच्च. ॥ ४ ॥

---

( क ) शतपथ ब्राह्मणे ६ । १ । १ ।

( ख ) मुण्डकोपनिषदि २ । १ । ७

( ग ) कठोप०.२ । ६ । ९

श्रीः ॥ हस्तादयस्तु स्थितेऽतोनैवम् ॥ श्रीः २।४।५॥

हस्तादयोऽपीन्द्रियाणि. जीवे देहान्तरस्थिते उपकारकत्वाविशेषादतो न सप्तैव, अपित्वेकादश "दशेमे पुरुषे प्राणा आत्मैकादशः" ( च ) इन्द्रियाणि दशैकञ्च,, ( छ ) इति श्रुतिस्मृतिभ्याम. बुद्ध्यादयो मनो वृत्तिविशेषाः. सप्तानां गतिश्रवणं विशेषणाच्च. तेषां प्राधान्यात्. ॥ ५ ॥ इति सप्तगत्यधिकरणम्

श्रीः ॥ अणवश्च ॥ २ । ४ । ६ ॥

तानि चाणूनि "प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (ज) इति श्रवणात् ॥ ६ ॥

श्रीः ॥ श्रेष्ठश्च ॥ श्रीः २ । ४ । ७ ॥

श्रेष्ठः पञ्चवृत्तिः प्राणोऽप्युत्पद्यते, उत्तरचिन्तार्थोऽयमनुवादः ॥७॥

॥ इति प्राणाणुत्वाधिकरणम् ॥

श्रीः ॥ न वायुक्रिये पृथगुपदेशात् ॥ श्रीः २।४।८

पञ्चवृतिः प्राणो न वायुमात्रं तत्क्रिया वा " एतस्माज्जायते प्राणः...खं वायुः" इति पृथगुपदेशात् ॥ ८ ॥

श्रीः॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः॥ श्रीः२।४।९

वायोः प्रथग्भूतोयं नाग्न्यादिवद्भूतान्तरं वायुरेव देहधारणयोग्याकारमापन्नश्चक्षुरादिवज्जीवोपकरणं चक्षुरादिभिः सहोपदेश तत्तुल्योपकारतन्मुख्यत्वेभ्यः. ॥ ९ ॥

---

( च ) बृ० ५ । ९ । ४

( छ ) गी० १३ । ५

( ज ) बृहदारण्यकोप० ६ । ४ । २

श्रीः ॥ अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥

श्रीः २ । ४ । १० ॥

करणं क्रिया, न जीवोपकाररूपक्रियारहितत्वे दोषः यतः श्रुतिरेव देहेंद्रियाद्यशैथिल्यकरणं दर्शयति. प्राणोत्क्रमणे देहादिशैथिल्याऽभिधानात्. ॥ १० ॥

श्रीः॥पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ श्रीः २ । ४ ।११॥

प्राण एक एव स्ववृत्तिभिः पञ्चभिः प्राणापानादिनामभाग् भवति कामादिभिर्यथैकमेवमनः " कामः सङ्कल्पः" इत्यारभ्य " एतत्सर्वं मनएव " (क) इति ॥ ११ ॥

*श्रीः ॥ अणुश्च ॥ श्रीः २ । ४ । १२ ॥

" प्राणोऽनूक्रामति" (ख) इत्युत्क्रान्तेरणुः ॥ १२ ॥

॥ इतिश्रेष्ठाणुत्वाधिकरणम् ॥

*श्रीः ॥ ज्योतिराद्यधिष्ठानन्तु तदा मननात्प्राणवताशब्दात् श्रीः ॥ २ । ४ । १३ ॥

जीवेन * सहाग्निवाय्विन्द्राद्याधिष्ठानम् परमात्मनःसङ्कल्पादेव भवति " योऽग्नौ तिष्ठन्नग्निमन्तरोयमयति " इत्यादिशब्दात् ॥१३॥

श्रीः ॥ तस्य च नित्यत्वात् ॥ श्रीः २ । ४ । १४ ॥

सर्वस्य तन्नियाम्यत्वनियमात् ॥ १४ ॥

॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥

---

( क ) बृ० ३ । ५ । ३

( ख ) बृ० ६ । ४ । २

* सहाग्न्यादेरिन्द्रियाद्यधिष्ठानम्

❀श्रीः॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥

श्रीः २ । ४ । १५ ॥

श्रेष्ठादन्यत्र ये प्राणास्त इन्द्रियाणि. तेष्वेवेन्द्रियत्वव्यपदेशात्. " इन्द्रियाणि दशैकञ्च,, इत्यादौ ॥ १५ ॥

श्रीः ॥ भेदश्रुतेर्वैलक्षण्याच्च ॥ श्रीः २ । ४ १६ ॥

" एतस्माज्जायते प्राणोमनः सर्वेन्द्रियाणिच " इति भेदेनोत्पत्तिश्रुतेरिन्द्रियवृत्त्युपरमेऽपि प्राणवृत्त्यनु (१) परमाच्च ॥ १६ ॥

॥ इति इन्द्रियाधिकरणम् ॥

❀श्रीः॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥

श्रीः २ । ४ । १७ ॥

देवादिनामरूपव्यष्टिसृष्टिश्चतुर्मुखशरीरकात् परमात्मन एव न केवलचतुर्मुखात् " नामरूपे व्याकरवाणि-तासां त्रिवृतं त्रिवृतमेकैकां करवाणि,, (क) इति त्रिवृत्करणं कुर्वतो नामरूपव्याकरणोपदेशात् त्रिवृत्करणन्तु केवलचतुर्मुखस्य न सम्भवति त्रिवृत्कृतैर्हि तेजोऽबन्नैरण्डमुत्पाद्य पश्चाच्चतुर्मुखसृष्टिः "तदण्डमभवद्धैमम्... तस्मिन् जज्ञे स्वयं ब्रह्मा,, (ख) इति स्मृतेः ॥ १७ ॥

श्रीः ॥ मांसादि भौमं यथाशब्दमितरयोश्च ॥

श्रीः २ । ४ । १८ ॥

"अन्नमशितं त्रेधा विधीयते " इत्यत्र प्रागुक्तत्रिवृत्करणा-

---

( १ ) परमवैलक्षण्याच्चेति तै० पा०

( क ) छा० ६ । ३ । ७

( ख ) मनुस्म० १ । ९

दर्थान्तरभूतः, अण्डान्तरवर्तिपुरुषोपभुक्तान्नादीनां परिणामप्रकार उच्यते अन्यथा मांसमनसो पुरीषादर्थान्तरत्वेनाप्यत्वतैजसत्वप्रसक्तिः तथा सति "अन्नमशितं त्रेधा" इति भूमेरेवत्रिधात्वोपक्रमः "अन्नमयं हिसोम्य! मनः" इति मनसोभौमत्वञ्च विरुध्यते तदितरयोरप्तेजसोस्त्रैविध्यं विरुध्यते. तदिदमाह "मांसादिभौमं यथा शब्द मितरयोश्च" इति पुरीषवन्मांसमनसी अपि भौमे इति, इहोच्यते तथा मूत्रवल्लोहितप्राणावप्याप्यौ. तथास्थिवन्मज्जावाचौ तैजसे. ॥१८॥

पूर्वमेव त्रिवृत्कृतं चेत् त्र्यात्मकं वस्तु कथमन्नमापस्तेज इत्युच्यते ? इत्यत्राह —

श्रीः॥ वैशेष्यात्तु तद्वादस्तद्वादः॥ श्रीः २ । ४ । १९

अन्नादिभूयस्त्वेन वैशेष्यादन्नादिवादः ॥ १९ ॥

॥ इतिसंज्ञामूर्त्ति कॢप्त्यधिकरणम् ॥

इतिश्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे द्वितीयाऽध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

पादेऽस्मिन् सूत्राण्येकोनविंशतिः ॥ १९ ॥
अधिकरणानि चाष्टौ ॥ ८ ॥

——*——

समाप्तश्चायं वाह्यतर्कविरोधपरिहाराऽध्यायो-
द्वितीयः ॥ २ ॥

—*—

॥ श्रीः ॥

श्रीमते रामानुजाय नमः ॥

श्रीश्रीनिवासपरब्रह्मणे नमः ॥

———*———

श्रीमद्भगवद्रामानुजाचार्यविरचिते,

# वेदान्तसारे,

॥ तृतीयाध्यायारम्भः ॥

❀ श्रीः ॥ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ श्रीः ३ । १ । १ ॥

जीवो देहाद्देहान्तरप्रतिपत्तौ भूतसूक्ष्मैः सम्परिष्वक्तो यातीति पञ्चाग्निविद्यायां प्रश्नप्रतिवचनाभ्यामवगम्यते "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"(क) इति प्रश्नः; इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"(ख) इति प्रतिवचनम् उत्तरैस्सूत्रैरर्थादभिव्यज्यते. स चायमर्थः जीवो ब्राह्मणादिदेहस्थः यागदानादि कर्म कृत्वा तत्तत्फलभोगायाऽस्माद् देहादुत्थाय गच्छन्नेतद्देहस्थाभिर्भूतान्तरसंसृष्टाभिः सूक्ष्माकाराभिरद्भिः सम्परिष्वक्तोऽग्नित्वेन निरूपितं द्युलोकं प्राप्य, ताभिरेवामृतमयदेहाकारपरिणताभिरद्भिः परिष्वक्तो देवानां शेषभावमुपगम्य, तैः सह तत्रत्यभोगमनुभूय, कर्मावसाने भुक्तशिष्टब्राह्मणादियोनिप्रापककर्मणा सह पुनरपीमं कर्मलोकमागम्य, कर्म कर्तुं ताभिः परिष्वक्तोऽग्नित्वरूपितं पर्जन्यं

---

(क) छा० ५ । ३ । ३ | (ख) छा० ५ । ९ । १

प्राप्य, वर्षधाराभिः सहाग्नित्वरूपितां पृथिवीमुपगम्य, व्रीह्यादिशस्येन संयुज्यान्नाकारपरिणतेन सहाग्नित्वरूपितं पुरुषं प्राप्य, तत्र शुक्राकारपरिणताभिस्ताभिरद्भिः परिष्वक्तोऽग्नित्वनिरूपितां योषितं प्राप्य, तत्र गर्भाकारपरिणताभिस्ताभिरद्भिः पुरुषशब्दाभिलपनीयाभिः परिष्वक्तः कर्मानुरूपं ब्राह्मणादिरूपेण जायत इति ॥ १ ॥

**श्रीः ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ श्री ३।१।२ ॥**

सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वाद्भूतान्तरसंसृष्टा आप एव हि भूयस्त्वेनाप्छब्देनोच्यन्ते ॥ २ ॥

**श्रीः ॥ प्राणगतेश्च ॥ श्रीः ३ । १ । ३ ॥**

"प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति जीवेन सहेन्द्रियगतेस्तदाश्रयत्वेन देहगमनं प्रतीयते ॥ ३ ॥

**श्रीः ॥ अग्न्यादिगतिश्रुतेरितिचेन्न, भाक्तत्वात् ॥**

**श्रीः ३ । १ । ४ ॥**

"अग्निं वागप्येति (क) इतीन्द्रियाणामग्न्यादिगतिश्रुतेर्न जीवेन सह गमनमितिचेन्न, वागाद्यभिमानिदेवतासु भाक्तत्वात् वागादिशब्दानाम् "ओषधीर्लोमानि" (क) इत्यनन्वयद्भिर्लोमादिभिः सह पाठात् ॥ ४ ॥

**श्रीः ॥ प्रथमे श्रवणादिति चेन्न, ता एव ह्युपपत्तेः ॥**

**श्रीः ३ । १ । ५ ॥**

प्रथमे द्युलोकाग्नावपामश्रवणान्नापो गच्छन्ति "एतस्मिन्नग्नौ

---

(क) बृ० ५ । २ । १३

देवाः श्रद्धां जुह्वति (क) इति श्रद्धैव श्रूयते इति चेन्न, आप एव श्रद्धाशब्देनोच्यन्ते इत्यप्सु पृष्टासु तदुत्तरत्वोपपत्तिर्गम्यते "श्रद्धा वा आपः" (ख) इति श्रूयते ॥ ५ ॥

**श्रीः ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥**

**श्रीः ३ । १ । ६ ॥**

अत्र प्रश्नप्रतिवचनयोराप एव प्रतीयन्ते न तत्परिष्वक्तो जीवः इतिचेन्न, उत्तरत्र "अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते,, (ग) इत्यादाविष्टादिकारिणां गमनप्रकारवचनात्. द्युलोकाऽग्नि सम्बन्धयप्छब्दवाच्यस्य "तस्याहुतेः सोमो राजा भवति" (क) इति सोमभूतस्यैव "सोमोराजा" (ङ) इति प्रत्यभिज्ञानादद्भिः परिष्वक्तस्त च्छरीरक एवाप इत्युच्यते इत्यवगम्येत ॥ ६ ॥

**श्रीः ॥ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥**

**श्रीः ३ । १ । ७ ॥**

"एष सोमोराजा...तं देवा भक्षयन्ति" (ङ) इति सोमापन्नस्य देवैर्भक्ष्यमाणत्ववचनम् भाक्तम् । अनात्मवित्त्वेन देवोपकरणत्वाभिप्रायं तथाहि दर्शयति श्रुतिः "यथा पशुरेवं स देवानाम्" (छ) इति पशुवद्देवोपकरणत्वं दर्शयति तथा आत्मविदामनात्मविदाञ्च परमपुरुषोपकरणत्वं देवोपकरणत्वञ्च स्मर्यते "देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि" (ज) इति ॥ ७ ॥

---

(क) छा० ५ । ४ । २
(ख)
(ग) छा० ५ । १० । ३
(ङ) छा० ५ । १० । ४
(छ)
(ज) गी० ७ । २३

❀श्रीः ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां-यथेतमनेवञ्च ॥ श्रीः ३ । १ । ८ ॥

कृतस्य कर्मणोऽन्ते निवर्तमानो भुक्तशिष्टकर्मवान्निवर्तते इति श्रुतिस्मृतिभ्यामवगम्यते "रमणीयचरणा रमणीयां योनिमापद्यन्ते" इति "ततः परिवृत्तौ कर्म फलशेषेण जातिं रूपम्" (क) इत्यादिका स्मृतिः । आरोहण । प्रकारे मार्गैकदेशे प्रकारान्तरेण चैकदेशे च ॥ ८ ॥

श्रीः ॥ चरणादितिचेन्न, तदुपलक्षणार्थेति-कार्ष्णाजिनिः ॥ श्रीः ३ । १ । ९ ॥

"रमणीयचरणाः" इति चरणशब्दो नानुशयपरः चरणशब्दस्य स्मार्ताचारविषयत्वादिति चेन्नानुशयोपलक्षणार्था, आचारश्रुतिः । तस्यैव सुखसाधनत्वात् ॥ ९ ॥

श्रीः ॥ आनर्थक्यमितिचेन्न तदपेक्षत्वात् ॥ श्रीः ३ । १ । १० ॥

स्मार्ताचारस्यानुपयोगात् आनर्थक्यमितिचेन्न, तदपेक्षत्वात्सर्वस्य पुण्यकर्मणः "सन्ध्याहीनोऽशुचिर्नित्यम्" (ख) इति वचनादिति कार्ष्णाजिनेर्मतम् ॥ १० ॥

श्रीः ॥ सुकृतदुष्कृत एवेति तु बादरिः ॥ श्रीः ३ । १ । ११ ॥

"रमणीयचरणाः...कपूयचरणाः" इति चरणशब्देन सुकृत

---

(क) आपस्तम्ब स्मृतौ । (ख) मनुस्मृ०

दुष्कृते एवाभिधीयेते पुण्यं कर्माचरतीति प्रसिद्धेरिति बादरिर्भगवानेतदेव स्वीकृतवान् । स्मार्ताचारापेक्षं सर्वं पुण्यं कर्मेति च स्वीकृतम् ॥ ११ ॥ इति कृतात्ययाधिकरणम

❀श्रीः ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥

श्रीः ३ । १ । १२ ॥

इष्टापूर्त्ताद्यकुर्वतामपि चन्द्रगमनमस्ति "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते" (क) इत्यविशेषात् ॥ १२ ॥

श्रीः ॥ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गति दर्शनात् ॥ श्रीः ३ । १ १३ ॥

इष्टापूर्त्ताद्यकुर्वतां यमसदने तत्फलमनुभूयारोहादिः "वैवस्वतं संयमनम्" (ख) इत्यादौ तद्गतिदर्शनात् ॥ १३ ॥

श्रीः ॥ स्मरन्ति च ॥ श्रीः ३ । १ । १४ ॥

"सर्वं चैते वशं यान्ति यमस्य" (ग) इति ॥ १४ ॥

श्रीः ॥ अपिच सप्त ॥ श्रीः ३ । १ । १५ ॥

सप्त रौरवादीनपि स्मरन्ति ॥ १५ ॥

श्रीः ॥ तत्रापि तद्व्यापारादविरोधः ॥ श्रीः३।१।१६॥

तत्रापि यमव्यापारादेव यमवश्यतया अविरोधः ॥ १६ ॥

श्रीः॥विद्याकर्मणोरिति तु प्रकृतत्वात् ॥श्रीः३।१।१७॥

विद्याकर्मणोः फलं ब्रह्मगमनं चन्द्रगमनञ्च कथम् ? "तद्य इत्थं

---

( क )

( ख ) भारया० प्र २ प १

( ग )

विदुः...तेऽर्चिषमभिसम्भवन्ति"(क)इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति"(ख)इति प्रकृतत्वात् ब्रह्मचन्द्रगमनयोरतः पापिनां न तद्गतिप्रसङ्गः ॥ १७ ॥

श्रीः ॥ न तृतीये तथोपलब्धेः ॥ श्रीः ३ । १ । १८ ॥

नच पापिनां द्युलोकगमनाय चन्द्रलोकगमनापेक्षा, तेषां द्युलोकगमनाभावोपलब्धेः "अथैतयोः पथोर्न कतरेण च" इत्यारभ्य "एतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते" ( ग ) इति तृतीयस्थानं हि ? पापकर्मणा उच्यते ॥ १८ ॥

श्रीः ॥ स्मर्यतेऽपि च लोके ॥ श्रीः ३ । १ । १९

लोके च द्रौपद्यादीनां पुण्यकर्मणामपि पञ्चम्याहुत्यनपेक्षदेहारम्भः स्मर्यते ॥ १९ ॥

श्रीः ॥ दर्शनाच्च ॥ श्रीः ३ । १ । २०

तथा श्रुतावपि दृश्यते "भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जम्" ( घ ) इति स्वेदजोद्भिज्जयोस्त्वनपेक्षत्वम् ॥ २० ॥

श्रीः ॥ तृतीयशब्दावरोधः संशोकजस्य ॥

श्रीः ३ । १ । २१ ॥

स्वेदजस्योद्भिज्जशब्देन संग्रह इत्यर्थः ॥ २१ ॥

इत्यनिष्टादिकार्यधिकरणम्

---

( क ) छा० ५ । १० । १
( ख ) छा० ५ । १० । ३
( ग ) छा० ५ । १० । ८
( घ )

❀श्रीः ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥

श्रीः ३ । १ । २२ ॥

"यथेतमाकाशम्" (क) इत्यादिनाकाशादिसादृश्यापत्तिः प्रत्यवरोह उपदिश्यते. तत्र तत्र सुखदुःखानुभवाभावोपपत्तेः तदनुभवार्थं हि तच्छरीरता २२ ।

इति तत्स्वाभाव्यापत्त्यधिकरणम्

❀श्रीः ॥ नातिचिरेण विशेषात् ॥श्रीः ३।१।२३॥

व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति "अतो वै खलु दुर्निष्पपतरम्" (ख) इति व्रीह्यादावेव विशेषवचनात् ॥ २३ ॥

इति नातिचिराधिकरणम्

❀श्रीः ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥

श्रीः ३ । १ । २४ ॥

"त इह व्रीहियवाः" ( ख ) इत्यादौ चान्यजीवाधिष्ठिते व्रीह्यादौ संश्लेषमात्रमेवावरोहत आकाशादिष्विव जननहेतुविरहिताभिलापात् "जायन्ते" इति वचनमौपचारिकम् यत्र ब्राह्मणादिजन्मास्ति तत्र "रमणीयचरणाः" इति हेतुरभिलप्यते ॥ २४ ॥

श्रीः ॥ अशुद्धमिति चेन्न शब्दात् ॥ श्रीः ३।१।२५॥

अवरोहतः पूर्वानुष्ठितयागादिष्वग्नीषोमीयाहिंसागर्भत्वेनाशुद्धं कर्मास्तीतिचेन्न "हिरण्यशरीर ऊर्ध्वस्स्वर्गलोकमेति" ( घ ) "न वा उ एतन्म्रियसे न रिष्यसि" (ङ) इति पशुसंज्ञपनस्याहिंसात्व शब्दात् ॥ २५ ॥

---

( क ) छा० ५ । १० । ५ | ( घ )
( ख ) छा० ५ । १० । ६ | ( ङ )

श्रीः ॥ रेतः सिग्योगोऽथ ॥ श्रीः ३ । १ । २६ ॥

"यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति" (क) इत्यनेन संसृष्टस्य रेतःसिग्योगमात्रमनन्तरमुच्यते अतः पूर्वमपि व्रीह्यादियोगमात्रम् ॥ २६ ॥

श्रीः ॥ योनेः शरीरं ॥ श्रीः ३ । १ । २७ ॥

योनिप्राप्तेः पश्चादेवावरोहता शरीरं प्राप्यते ॥ २७ ॥

इति अन्याधिष्ठिताधिकरणम्

---

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे तृतीयाध्यायस्य प्रथमः पादः ॥१॥

---*---

पादेऽस्मिन् सूत्राणि सप्तविंशतिः ॥ २७ ॥
अधिकरणानि च षट् ॥ ६ ॥
हरिः ओम् । तत्सत्

---

नन्वत्यल्पेयं व्याख्येति, नैवम्
यत एवं देशिकगिरः
कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तर -
ग्रहिलमनसः पश्यन्त्यल्पां यतीश्वरभारतीम् ॥
विकटमुरभिद्वक्षःपीठीपरिष्करणोचितः ।
कुलगिरितुलारोहे भावी कियानिव कौस्तुभः ॥

---

(क) छा० ५ । १० । ६

श्रीमते रामानुजाय नमः ॥

—*-*-*-*—

श्रीमहालक्ष्मीसमेताय श्रीरङ्गराजाय नमः ॥

——*:*:*——

तृतीयाध्याये द्वितीयपादारम्भः ॥

——*-*-*——

## श्रीः ॥ सन्ध्ये सृष्टिराह हि ॥ श्रीः ३ । २ । १ ॥

सन्ध्ये स्वप्ने "अथ रथान् रथयोगान् पथः सृजते" (क) इत्यादिनाभिहिता सृष्टिर्जीवकृता "पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" (क) इति स्वप्नद्रष्टारं जीवमेव कर्तारमाह हि श्रुतिः ॥ १ ॥

## श्रीः ॥ निर्मातारञ्चैके पुत्रादयश्च ॥ श्रीः ३।२।२ ॥

"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" (ख) इति एनं जीवं स्वाप्नार्थनिर्मातारमेके शाखिनोऽधीयते अत्र कामशब्दनिर्दिष्टाः काम्यमानतया पुत्रादयः। पूर्वत्र "सर्वान्कामान् छन्दतः" (ग) इत्युक्त्वा "शतायुषः पुत्रपौत्रान्" (घ) इति विवृतत्वात् ॥ २ ॥

## श्रीः॥ मायामात्रं तु कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वात्॥ श्रीः ३ । २ । ३ ॥

स्वप्ने या रथादिसृष्टिस्तदिदमीश्वरकृतं मायामात्रं स्वप्नदर्शके-

---

(क) बृ० ६ । ३ । १०
(ख) कठोप० २ । ५ । ८
(ग) क० १ । २५
(घ) क० १ । २३

नैवानुभाव्यं तत्कालमात्रावसानमित्याश्चर्यतया मायेत्युक्तं जीवस्य सत्यसङ्कल्पत्वादिस्वाभाविकं स्वरूपं संसारदशायां कात्स्न्येनाऽन भिव्यक्तमिति न तस्य सङ्कल्पमात्रात्सृष्टिरुपपद्यते. "स हि कर्ता" "पुरुषो निर्मिमाणः" इति न जीवविषयम् " तस्मिन् लोकाः श्रिताः सर्वे,, (क) इति वचनात् ॥ ३ ॥

स्वाभाविकस्याऽनभिव्यक्तिहेतुमाह —

**श्रीः ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ श्रीः ३ । २ । ४ ॥**

अथ जीवस्यानाद्यपचारप्रवाहेण पराभिध्यानादेव तिरोहितं तदपचारात्सदनुवृत्तेरस्य बन्धमोक्षौ "अथ तस्य भयं भवति" (ख) " अथ सोऽभयङ्गतो भवति" (ख) इति श्रुतेः ॥ ४ ॥

**श्रीः ॥ देहयोगाद्वा सोऽपि ॥ श्रीः ३ । २ । ५ ॥**

सोऽपि तिरोभावो देवमनुष्यादिदेहाकाराचिद्योगात् सृष्टिवेलायां नामरूपविभागानर्हसूक्ष्माकाराचिद्योगात्प्रलये ॥ ५ ॥

**श्रीः ॥ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ श्रीः ३ । २ । ६ ॥**

"अथ स्वप्ने पुरुषं कृष्णादन्तम" ( ग ) इत्यादि श्रुतेः शुभाशुभसूचकश्च हि स्वप्नः स्वप्नविदश्चाचक्षते अतो न जीवः स्रष्टा स्वाप्नार्थनाम् ॥ ६ ॥ इति सन्ध्याधिकरणम्

---

( क ) क० २ । ५ । ८
( ख ) तै० आ० २ । ७ । २
( ग )

❀श्रीः ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥

श्रीः ३ । २ । ७ ॥

स्वप्नाभावः सुषुप्तिः"आसु तदा नाडीषु सुप्तो भवति"(क)"सता सोम्य ! तदा सम्पन्नो भवति" इति श्रुतेर्नाडीषु परमात्मनि च "पुरीतति शेते" (ख) इति श्रुतेः । पुरीतति च प्रासादखट्वापर्यङ्कवदविरोधः ॥ ७ ॥

श्रीः ॥ अतः प्रबोधोऽस्मात् ॥ श्रीः ३ । २ । ८ ॥

"सत आगम्य न विदुः" ( ग ) इति ब्रह्मणः प्रबोधे श्रुतिरत एव ॥ ८ ॥ इति तदभावाधिकरणम्

❀श्रीः ॥ स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥

श्रीः ३ । २ । ९ ॥

सता सपन्नोऽपि सुप्त एव प्रबुद्ध उत्तिष्ठति ज्ञानवैधुर्येण कृतकर्मणस्तेनानुभाव्यत्वात् पूर्वानुभूतप्रत्यभिज्ञानात् "त इह व्याघ्रो वा" इत्यादि "यद्यद्भवन्ति तथा भवन्ति" इति शब्दान्मोक्षोपायविध्यानर्थक्याच्च ॥ ९ ॥ इति कर्म्मानुस्मृतिशब्दविध्यधिकरणम्

❀श्रीः॥ मुग्धेऽर्द्धसम्पत्तिः परिशेषात्॥ श्रीः३।२।१०॥

मूर्च्छिते पुरुषे याऽवस्था सा मरणायार्द्धसम्पत्तिरिति हेतुभेदादाकारभेदादपुनरुत्थाननियमाभावाच्च ज्ञायते ॥ १० ॥

---

( क ) छा० ८ । ६ । ३
( ख बृ० ४ । १ । १९
( ग ) छा० ६ । १० । २

❋श्रीः ॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥

श्रीः ३ । २ । ११ ॥

जागरादिषु चतसृष्ववस्थास्वन्तरात्मतया स्थितेरपि परस्य ब्रह्मणो न कश्चिद्दोषो यतः सर्वत्र श्रुतिस्मृतिषु निरस्तनिखिलदोष सम्बन्धत्वसमस्तकल्याणगुणाकरत्वरूपोभयलिङ्गं ब्रह्मणः श्रुतम "अपहतपाप्मा...सत्यसङ्कल्पः" "निरवद्यम्" 'यः सर्वज्ञः सर्ववित्" "समस्तकल्याणगुणात्मकोऽसौ" (क) "सकला न यत्र क्लेशादयः" (ख) इत्यादिषु ॥ ११ ॥

श्रीः ॥ भेदादितिचेन्न प्रत्येकमतद्वचनात् ॥

श्रीः ३ । २ । १२ ॥

जीवस्य स्वतोऽपहतपाप्मनोऽपि शरीरसम्बन्धित्वावस्थाभेदा-द्यथा दोषसम्बन्धस्तथा परस्यापि. "यस्य पृथिवी शरीरम्" इति शरीरसम्बन्धित्वाद्दोष इति चेन्न, "यस्य पृथिवीशरीरम" इत्यादिषु प्रतिपर्यायम "सत आत्मान्तर्याम्यमृतः" इति निर्दो-षत्ववचनात् ॥ १२ ॥

श्रीः ॥ अपिचैव मेके ॥ श्रीः ३ । २ । १३ ॥

एकस्मिन् शरीरेऽवस्थितयोर्जीवपरयोर्विशेषउक्तः एवमेके स्वशब्देनाधीयते "द्वासुपर्णा" इत्यारभ्य "अन्यः पिप्पलं स्वाद्वत्त्यनश्न-न्नन्योऽभिचाकशीति" ॥ १३ ॥

श्रीः ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ श्रीः ३ । २ । १४ ॥

मनुष्यादिशरीरेषु शरीरित्वेऽपि रूपरहितवस्तुवदेव वर्त्तते

---

(क) वि० पु० ६ । ५ । ८४ / (ख) वि० पु० १ । २ । १०

तद्ब्रह्म, जीवनामरूपयोर्निर्वोढृत्वेन प्रधानत्वात्. तथाहि श्रुतिः "नामरूपयोर्निर्वहिता ते यदन्तरा" (क) इति नामरूपयोरन्तरा अस्पृष्टो मध्ये वर्तते अवश्य इत्यर्थः ॥ १४ ॥

श्रीः ॥ प्रकाशवच्चावैयर्थ्यात् ॥ श्रीः ३ । २ । १५ ॥

यथा "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यावैयर्थ्यात् स्वप्रकाशतया ज्ञानस्वरूपं ब्रह्म; तथा "निरवद्यम्" "यः सर्वज्ञः सर्ववित्" "पराऽस्य शक्तिर्विविधैव श्रूयते। स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिपरश्शतवाक्यावैयर्थ्यात् । निरवद्यं कल्याणगुणाकरं चेत्युभयलिङ्गमेव ॥ १५ ॥

श्रीः ॥ आह च तन्मात्रम् ॥ श्रीः ३ । २ । १६ ॥

"सत्यं ज्ञानम्" इति ज्ञानस्वरूपतामात्रमाह—नान्यन्निवारयति अविशेषाद्विरोधाभावाच्च ॥ १६ ॥

श्रीः ॥ दर्शयति चाथोऽपि स्मर्यते ॥

श्रीः ३ । २ । १७ ॥

दर्शयति च निर्दोषत्वं कल्याणगुणाकरत्वञ्च वेदान्तगणः "निष्कलं निष्क्रियं शान्तम्" "तमीश्वराणाम्" इत्यादि "यो मामजमनादिम्" (ख) इत्यादिना स्मर्यते च तत् ॥ १७ ॥

श्रीः ॥ अत एव चोपमा सूर्यकादिवत् ॥

श्रीः ३ । २ । १८ ॥

यतः पृथिव्यादौ सर्वत्र स्थितस्यापि निर्दोषत्वं कल्याणगुणा

---

(क) छा० ८ । १४ । | (ख) गी० १० । ३

करत्वञ्च, अतएव शास्त्रेषु जलसूर्यकादिवदित्युपमा "आकाशमेकं हि यथा...जलाधारेष्विवांशुमान्" (क) इति ॥ १८ ।

श्रीः ॥ अम्बुवदग्रहणात्तु न तथात्वम् ॥

श्री ३ । २ । १६ ॥

अम्बुनि सूर्यो यथा गृह्यते न तथा परमात्मा पृथिव्यादौ, अत्र परमार्थतः स्थितः । अतो न निर्दोषत्वम् ॥ १६ ॥

इतिचेत् परिहरति—

श्रीः ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ श्रीः ३ । २ । २० ॥

नेति वर्तते नैवं पृथिव्यादिष्वन्तर्भावात्परस्य तद्गतवृद्धिह्रासभाक्त्वदृष्टान्तेन निवर्त्यते इत्युभयदृष्टान्तोपादानसामञ्जस्यादवगम्यते "आकाशमेकं हि यथा" इति वस्तुतः स्थितमाकाशं वस्तुतोऽनवस्थितश्च सूर्यकमुभयं ह्युपादत्ते, अनवस्थितस्य यथा न दोषस्पर्शस्तथा स्थितस्यापि हेत्वभावादिति ज्ञापयितुं विवक्षितधर्मसाम्यज्ञापनाय सिंह इवेति हि दृष्टान्तो दृश्यते अथवा दर्शनाच्चेति "अश्व इव रोमाणि विधूय पापम्" (ख) इत्यादौ विवक्षितसाम्यान्वयो हि दार्ष्टान्तिके दृश्यते, अश्वो हि रोमाणि सहजानि स्वावयवभूतानि मूर्त्तद्रव्याणि, स्वशरीरं कम्पयन् कानिचित् विमुञ्चति, आत्मा तु स्वेन कदाचिदनुष्ठितानि क्षणध्वंसितया विनष्टानि कर्माणि भगवदप्रीतिकराणीति भगवता स्वाप्रीतिकृतदुःखानि दातुं प्रवृत्तेनोपासनप्रीतिकृतानुग्रहान्निवर्तितानीति तत्सम्पर्काभावमनुसन्दधाति ॥ २० ॥

---

( क ) | ( ख ) छा० ८ । १३

"अथात आदेशो नेति नेति" (क) इति सकलविशेषप्रतिषेधा-न्नोभयलिङ्गमित्यत्राह—

**श्रीः ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ श्रीः ३ । २ । २१ ॥**

"द्वे वाव ब्रह्मणो रूपे" इति प्रकृत्य कृत्स्न प्रपञ्चस्य ब्रह्मणो रूपत्वेनाप्रज्ञातस्य रूपत्वमुपदिश्य, पुनस्तस्यैव प्रतिषेधासम्भवात् प्रकृतैतावन्मात्रं न भवति ब्रह्मणि । ब्रह्मणः प्रकृतेयत्तां नेति नेतीति प्रतिषेधति. ततः पश्चात्पूर्वमनुक्तं गुणगणं ब्रवीति च " नह्येतस्मादिति नेत्यन्यत्परमस्ति" (क) इति नेतिनिर्दिष्टाद्ब्रह्मणोऽन्यन्न ह्यस्तीत्युक्तत्वम् अथनामधेयम् "सत्यस्य सत्यम्" (क) इति च तन्निर्वचनम् "प्राणा वै सत्यं तेषां मेषसत्यम्"(क)इति प्राणा जीवात्मानः।वियदादिवदुत्पत्त्यभावात् सत्यम् तेभ्योऽप्येष सत्यं ज्ञानसङ्कोचाद्यभावात् अतः प्रकृतेयत्ताप्रतिषेधादुभयलिङ्गमेव॥२१॥

प्रत्यक्षेण सन्मात्रं ब्रह्मैव गृह्यते अन्यत्सर्वं भ्रान्तमिति "नेति नेति इति" निषेधार्थं इत्यत्राह —

**श्रीः ॥ तदव्यक्तमाह हि ॥ श्रीः ३ । २ । २२ ॥**

ब्रह्मस्वरूपं न केनाऽपि प्रमाणेन व्यज्यते तथाह हि श्रुतिगणः " न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् " (ख) इत्यादिः प्रत्यक्षादिना घटपटादेरेवाऽस्तित्वं गृह्यते न ब्रह्मणः ॥ २२ ॥

---

( क ) बृ० ४ । ३ । ६ | ( ख ) तै० ना० ६ । १ । १०

**श्रीः ॥ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥**

**श्रीः ३ । २ । २३ ॥**

अपिचास्यर्थप्रियानुध्यानरूपसम्यक्प्रीणने सति ब्रह्मस्वरूपं गृह्यते इति श्रुतिस्मृतिभ्यामवगम्यते "नायमात्मा प्रवचनेन" इत्यादि श्रुतिः "नाहं वेदैः ,, (क) इत्यादिस्मृतिश्च २३ ।

**श्रीः ॥ प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्य-भ्यासात् ॥ श्रीः ३ । २ । २४ ॥**

संराधनकर्मण्यभ्यासात् येषां ब्रह्मस्वरूपदर्शनं जातं तद्दर्शने-ज्ञानानन्दादेरिव जगदैश्वर्यस्याप्यवैशेष्यं प्रतीयते "अहं मनुर-भवं सूर्यश्च,, इत्यादौ २४ ।

**श्रीः॥अतोऽनन्तेन तथा हि लिङ्गम्॥ श्रीः३।२।२५॥**

अतो "द्वे वाव ब्रह्मणो रूपे,, इत्यादिनोपदिष्टेनानन्तकल्याणगुणगणेन योगो ब्रह्मणः सिद्धस्तथा सत्युभयलिङ्गमेव हि ? ब्रह्म ॥ २५ ॥ श्रीगोदादेवीसमेतश्रीकृष्णाय परब्रह्मणे नमः

**❀ श्रीः ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥**

**श्रीः ३ । २ । २६ ॥**

"आत्मैवेदं सर्वम ,, " अस्मान्मायीसृजते ,, इत्येकत्वनानात्वव्यपदेशादहिकुण्डलभावादिवत् ब्रह्मस्वरूपस्यैव " द्वे वाव ब्रह्मणो रूपे,, इत्यादिनोक्तः पृथिव्यादिभावः २६ ।

---

(क) गी० ११ । ५३

श्रीः ॥ प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ श्रीः ३।२।२७॥

प्रकाशतदाश्रययोर्यथा. स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्यम् एव-मचिद्ब्रह्मणोश्चैकजातियोगेन ॥ २७ ॥

श्रीः ॥ पूर्ववद्वा ॥ श्रीः ३ । २ । २८ ॥

वा शब्दः पक्षद्वयव्यावृत्त्यर्थः यथा पूर्वं जीवस्य प्रकाशजा-तिगुणशरीरवत् तद्विशेषणैकस्वभावतया विशिष्टैकदेशत्वेनां-शत्वमेवमचिद्वस्तुनोऽपि "आत्मैवेदं सर्वम्„ इति चिदचितोरेके-नैव शब्देनैकयाभिधानमित्यंशत्वमप्येकदेशरूपमिति पूर्ववद्वेत्युक्तम् इतरपक्षयोर्ब्रह्मणः सदोषतादि दुर्वारमित्यर्थः"यस्य पृथिवीशरीरं„ "यस्यात्माशरीरम्" इति चिदचिद्वस्तुनोश्शरीरतया तद्विशेषण-स्वभावता सिद्धा ॥ २८ ॥

श्रीः ॥ प्रतिषेधाच्च ॥ श्रीः ३ । २ । २९ ॥

"नाऽस्य जरयैतज्जीर्यते" ( क ) इत्यादिना चिद्धर्मप्रतिषे-धाच्चैवम् ॥ २९ ॥ इत्यहिकुण्डलाधिकरणम् ।

❀श्रीः ॥ परमतः सेतून्मानसम्बन्धभेदव्यप-देशेभ्यः ॥ श्रीः ३ । २ । ३० ॥

"जन्माद्यस्य यतः" १ । १ । २ इत्यादिना "प्रतिषेधाच्च" ३ । २ । २९ । इत्येतदन्तेन यत्परमकारणम् ब्रह्म प्रतिपादितम् अतः परमपि किञ्चित्तत्त्वमस्तीति युक्त्याभासेनाशङ्क्यते "अथ य आत्मा स सेतुः"(ख)"एतं सेतुं तीर्त्वा„(ग)"चतुष्पाद्ब्रह्म„ (घ)"अमृतस्यै-

---

( क ) छा० ८ । १ । ५
( ख ) छा० ८ । ४ । १
( ग ) छा० ८ । ४ । २
( घ ) छा० ३ । १८ । २

पसेतुः" (क) इत्यादिभिरस्य ब्रह्मणः सेतुत्वतरितव्यत्वपरिमितत्व-प्रापकत्वव्यपदेशेभ्यः "तेनेदं पूर्णं पुरुषेण सर्वं ततोयदुत्तरतरम्" इत्येतस्माद् * र्थान्तरत्वव्यपदेशाच्चान्यत्परमस्तीति ॥ ३० ॥

**श्रीः ॥ सामान्यात्तु ॥ श्री ३ । २ । ३१ ॥**

तुशब्देनैतद्व्यावर्तयति नैतद्युक्तम्, कुतः ? "नह्येतस्मादिति नेत्यन्यत्परमस्ति" (ख) इतिमूर्तामूर्तप्रपञ्चप्रकारतया तद्विशिष्टादिति नेतिनिर्दिष्टाद्ब्रह्मणोऽन्यत्परं नास्तीत्यादिनिषेधसहस्रात् परस्य ब्रह्मणः सेतुत्वव्यपदेशः प्रकाशनात् सर्वलोकासङ्करकरत्वेन सेतुसामान्यात्तु तथाह "अथ यआत्मा ससेतुर्विधृतिरेषांलोकानामसंभेदाय,, (ग) इति "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत,, इत्यारभ्य, उक्तजगन्निमित्तोपादानभूतस्यैव ब्रह्मणः "एतमितः प्रेत्याऽभिसम्भवितास्मि,, इति परमप्राप्यत्ववचनात् तरतिरपि प्राप्तिवचनः (१) वेदान्तं तरतीति वत् ॥ ३१ ॥

**श्रीः ॥ बुद्ध्यर्थः पादवत् ॥ श्रीः ३ । २ । ३२ ॥**

"चतुष्पाद्" इत्युन्मानव्यपदेशोपि "वाक्पादः... चक्षुष्पादः" (ङ) इति वदुपासनार्थः ॥ ३२ ॥

**श्रीः ॥ स्थानविशेषात्प्रकाशादिवत् ॥**

**श्रीः ३ । २ । ३३ ॥**

अपरिमितस्यापि स्थानविशेषसम्बन्धात् अवच्छिद्यानुसन्धानं

---

( क ) मु० २ । २ । ५

* अर्थान्तर व्यपदेशाच्चेति-ते ० पु० पा०

( ख ) बृ० ४ । ३ । ६

( ग ) छा० ८ । ४ । १

( १ ) वेदान्त मित्यादिनान्ध्र-पुस्तके

( ङ ) छा० ३ । १८ । २

युज्यते प्रकाशाकाशादेरिव विततस्यापि वातायनघटादिना ॥३३॥

## श्रीः ॥ उपपत्तेश्च ॥ श्रीः ३ । २ । ३४ ॥

प्राप्यस्यैवपरमात्मनः प्रापकत्वोपपत्तेः यथाह "यमेवैष वृणुते तेन लभ्यः,, ( क ) इति ॥ ३४ ॥

## श्रीः ॥ तथान्यप्रतिषेधात् ॥ श्रीः ३ । २ । ३५ ॥

"यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्,, ( ख ) इत्यस्मिन् वाक्ये पुरुषादन्यस्य ज्यायस्त्वप्रतिषेधादितोऽधिकं नास्ति "ततोयदुत्तरतरम्,, इति तु यतः पुरुषतत्त्वादन्यदुत्कृष्टं नास्ति तत उत्तरतरम् पुरुषतत्त्वमेवारूपमनामयम् "य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति" ( ग ) इत्युपक्रमप्रतिज्ञातं सहेतुकमुपसंहृतम् "तमेवं विदित्वातिमृत्युमेति नान्यः पन्थाः" इत्युपक्रमे प्रतिज्ञातम्. अन्यथोपक्रमविरोधश्च ॥३५॥

## श्रीः ॥ अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥

## श्रीः ० । ३ । ३६ ॥

"अणोरणीयान्महतोमहीयान्,, "तेनेदं पूर्णं पुरुषेण सर्वम्" "व्याप्य नारायणः स्थितः, "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यादिशब्दैः, अनेन ब्रह्मणा स्वव्यतिरिक्त * व्याप्यत्वमवगतं तत्तु तस्मात्परमिति वारयति ॥ ३६ ॥

---

( क ) मु० ३ । २ । ३
( ख ) श्वे० ३ । ९
( ग ) श्वे० ३ । १०
* व्यापकत्वमिति तै०पा०

❋श्रीः ॥ फलमत उपपत्तेः ॥ श्रीः ३ । २ । ३७ ॥

अतः परस्माद् ब्रह्मण एव कर्मभिरुपासनेन चाराधितात् भोगापवर्गरूपफलं सिध्यतीति. कर्म हि क्षणध्वंसि न कालान्तरभाविफलायाऽलमिति, सर्वज्ञात्परमकारुणिकात् फलसिद्धरुपपद्यते ॥ ३७ ॥

श्रीः ॥ श्रुतत्वाच्च ॥ श्रीः ३ । २ । ३८ ॥

श्रुतमेव हि "अन्नादो वसुदानः" (च) "एष ह्येवानन्दयाति" इत्यस्यैव फलदायित्वम ॥ ३८ ॥

श्रीः॥ धर्मं जैमिनिरत एव ॥ श्रीः ३ । २ । ३९ ॥

धर्ममेवात उपपत्तेः श्रुतत्वाच्च फलदायिनं जैमिनिर्मेने. उपपत्तिस्तु कृष्यादेर्मर्दनादेश्च कर्मणः साक्षात्परम्परया वा फलसिद्धिदर्शनम. श्रुतश्च कामिनः कर्त्तव्यतया कर्म, विधानान्यथानुपपत्त्या कर्मैवापूर्वद्वारेण तत्तत्फलसाधनमिति निश्चयः ॥ ३९ ॥

श्रीः ॥ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥

श्रीः ३ । २ । ४० ॥

पूर्वोक्तं परमपुरुषस्यैव फलदायित्वं भगवान् बादरायणो मन्यते "वायव्यं श्वेतमालभेत" (छ) इत्यादिषु "स एवैनं भूतिं गमयति" (छ) इति * भगवदात्मकतया वाय्वादेः कर्मविधिष्वेव फलहेतुत्व

(च) बृ० ६ । ४ । २४
(छ) का० २ प्र० १ प० १

* भगवदात्मकत्वाद्वायवादेरिति (ख) पुस्तके

व्यपदेशात् * वाक्यशेषो विध्यपेक्षितं वक्तीति "प्रतितिष्ठन्ति ह वा" (च) इत्यादिषु स्वीक्रियते "यो वायौ तिष्ठन्" इति श्रूयते ॥ ४० ॥



इति श्रीमद्भगवद्रामानुजाचार्यविरचिते
श्रीमति वेदान्तसारे तृतीयाध्यायस्य,
द्वितीयः पादः ॥ २ ॥



पादेऽस्मिन् सूत्राणि चत्वारिंशत् ॥ ४० ॥
अधिकरणान्यष्टौ ॥ ८ ॥
हरिः ओ३म् तत्सत्



श्रीवेदान्ताचार्यसूक्तिः

जडमतिमुखाद्न्तादन्तिव्यथौषधिसिद्धयः ।
प्रमितिनिधयः प्रज्ञाशालिप्रचालनयष्टयः ॥
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदाः ।
यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्तयः ॥

---

( * ) वाक्यशेषस्थं विध्यपेक्षितंहि, इति तै० पा०

( च )

श्रीमते रामानुजाय नमः ॥

श्रीलक्ष्मीवेङ्कटेशाय नमो नमः ॥

॥ तृतीयाध्याये तृतीयपादारम्भः ॥

## ❀श्रीः ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ श्रीः ३ । ३ । १ ॥

( सर्ववेदान्तप्रत्ययम् ) * दहराद्युपासनमेकमेव "विद्यादुपासीत,, इति कर्मविधिष्विवचोदनाफलसंयोगरूपाख्यानामविशेषात् ॥ १ ॥

## श्रीः॥ भेदान्नेति चेदेकस्यामपि॥ श्रीः ३ । ३ । २ ॥

अविशेषपुनःश्रुतिभेदापादिकेति नविद्यैक्यमितिचेत्. विद्यैक्येपि शाखान्तरे प्रतिपत्तृभेदान्न भेदः ॥ २ ॥

## श्रीः॥ स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ श्रीः ३ । ३ । ३ ॥

अथर्ववेदे "तेषामेवैतां ब्रह्मविद्यां वदेत" इति शिरोव्रतवतां नियमः शिरोव्रतस्य स्वाध्यायाङ्गत्वेन " नैतदचीर्णव्रतोऽधीयीत" (क)इतितस्याध्ययनसम्बन्धावगमात्. समाचाराख्यग्रन्थे इदमपि वेदव्रतत्वेन व्याख्यातमिति वेदव्रतत्वावगमाच्च " ब्रह्मविद्याम '

---

* इत्यधिकन्तै० पुस्तके

( क )

इत्यत्र ब्रह्मशब्दो वेदविषयः. यथा सवहोमास्तेषामेव, तथा शिरोव्रतमपीति तत्र विद्याभेदलिङ्गम् ॥ ३ ॥

श्रीः ॥ दर्शयति च ॥ श्रीः ३ । ३ । ४ ॥

श्रुतिरेव विद्यैक्यं दर्शयति छान्दोग्ये दहरविद्योक्तं गुणाष्टकं तैत्तिरीयके केवलम् "तस्मिन् यदन्तः" इति वदति ॥ ४ ॥

श्रीः ॥ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥

श्रीः ३ । ३ । ५ ॥

एवं सर्वत्र विद्यैक्ये अन्यत्रोक्तानामन्यत्रोपसंहारस्तद्विद्योपकाररूपार्थैक्यात् यथैकविधिशेषतया * विहिताङ्गानामुपसंहारविधिशेषतया विहिताङ्गानामिति ॥ ५ ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम्

पूर्वकाण्डोदितं ( १ ) स्थिरीकृत्यात्र वक्तव्यमाह—

❋श्रीः ॥ अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥

श्रीः ३ । ३ । ६ ॥

वाजसनेयिनां छन्दोगानां चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपराभवफलं विहितं तत्र विद्यैक्यं पूर्वपक्षं हृदि निधाय राद्धान्तच्छायया चोदयति,वाजसनेयिनां प्राणदृष्ट्योपासनम् उद्गीथकर्तृविषयमितरत्र कर्मविषयमिति शब्दादेव प्रतीयते "अथ हेममासन्यं प्राणमूचुस्त्वं

---

* यथैक विधिशेषतयाविहिताङ्गानामिति, इत्यन्तमेवान्ध्रपुस्तके । (क) पुस्तके तु 'विहितोपसंहार्यं विधिशेषेत्यादि (ख) पुस्तकेतु यथामुद्रितमेवेति ।

( १ ) स्त्रीकृत्येति तै०पा०

न उद्गायेति स तथेति तेभ्य...उदगायद्" (क) इत्यादिनोद्गीथकर्तृविषयं वाजिनाम् छान्दोगानान्तु "यएवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" (ख) इत्युद्गीथविषयमितिचेत्तदिदमाह—अन्यथात्वं शब्दादितिचेदिति न उपक्रमाविशेषात् 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम,, ( ग ) इति अन्यत्रापि तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः,, ( घ ) इति ॥ ६ ॥

## श्रीः ॥ न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥

## श्रीः ३ । ३ । ७ ॥

नैवं प्रकरणमप्युभयत्र भिद्यते "ओमित्येतदक्षरमुद्गीथमुपासीत,, (ङ) इत्युद्गीथावयवभूतप्रणवविषयं छन्दोगानाम् "हन्तासुरान् यज्ञउद्गीथेनात्ययाम,, इति तु वाजिनाम् कृत्स्नोद्गीथविषयमिति रूपभेदाद्विद्याभेदः. यथैकस्यामपिशाखायामुद्गीथोपासने हिरण्मयपुरुषदृष्टेः "परोवरीयस्त्वादिविशिष्टदृष्टेर्भिद्यते ॥ ७ ॥

## श्रीः॥ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि॥श्रीः३।३।८॥

उद्गीथविद्येति संज्ञैक्यादुभयत्र विद्यैक्यमुक्तमिति चेद्विधेयभेदेपि संज्ञैक्यमस्त्येव, यथानैयमिकाग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे चेत्येवमादिषु ॥ ८ ॥

## श्रीः ॥ व्याप्तेश्च समञ्जसम् ॥ श्रीः ३ । ३ । ६ ॥

प्रथमप्रपाठके उपक्रमवदुत्तरास्वपि प्रणवस्योपास्यत्वव्याप्तेः

---

( क ) बृ० ३ । ३ । ७
( ख ) छा० १ । २ । ७
( ग ) बृ० ३ । ३ । १
( घ ) छा० १ । २ । १ ।
( ङ ) छा० १ । १ । १

मध्ये च "उद्गीथमुपासाञ्चक्रिरे" इति प्रणवविषयत्वमेव समञ्जसम् ॥ ९ ॥

❀श्रीः ॥ सर्वाभेदादन्यत्रेमे ॥ श्रीः ३ । ३ । १० ॥

"योह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद...प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च"(क) इति वाजिनां छन्दोगानां कौषीतकिनाञ्च प्राणविद्यायां वागादिकरणग्रामस्थितेस्तत्कार्यस्य च प्राणहेतुकत्वेन तिसृष्वप्येकरूपेण प्राणज्यैष्ठ्यमुपपादितं. वागादिगतवसिष्ठत्वादिसम्बन्धित्वमपि प्राणस्योभयत्रोक्तं कौषीतकिनान्तु तन्नोक्तम्। तथापि सर्वत्र ज्यैष्ठ्योपपादनप्रकारस्य सर्वस्याभेदाद्विद्यैक्यमिति कौषीतकिप्राणविद्यायामपि वसिष्ठत्वादय उपसंहार्याः ॥ १० ॥

इति सर्वाभेदाधिकरणम्

❀श्रीः ॥ आनन्दादयः प्रधानस्य॥श्रीः ३ । ३ । ११॥

अभेदादिति वर्तते ब्रह्मस्वरूपनिरूपणान्तर्गतामलत्वज्ञानानन्दादयो गुणाः सर्वासु परविद्यासूपसंहार्या गुणिनो ब्रह्मणः सर्वत्राभेदात् ॥ ११ ॥

श्रीः॥ प्रियशिरस्त्वाद्यप्राप्तिरुपचयाऽपचयौ हि भेदे ॥

श्रीः ३ । ३ । १२ ॥

"तस्य प्रियमेव शिरः" ( क ) इति प्रियशिरस्त्वादीनामप्राप्तिर्ब्रह्मगुणत्वाभावात् तेषां शिरःपक्षादिभेदे ब्रह्मगुणे सति ब्रह्मण उपचयापचयप्रसक्तिः ॥ १२ ॥

---

( क ) तैत्ति० आ० २।५।२।

श्रीः ॥ इतरे त्वर्थसामान्यात् ॥ श्रीः ३ । ३ । १३ ॥

आनन्दादयः स्वरूपनिरूपणान्तर्गततया ब्रह्मसमाना इत्युपसंहार्या एव । १३ ।

श्रीः ॥ आध्यानाय प्रयोजनाभावात् ॥ श्रीः ३ । ३ । १४ ॥

प्रियशिरस्त्वाद्युपदेशो ब्रह्मणोऽनुचिन्तनार्थः प्रयोजनान्तराभावात् । १४ ।

श्रीः ॥ आत्मशब्दाच्च ॥ श्रीः ३ । ३ । १५ ॥

अन्योऽन्तरात्मानन्दमयः„ "इत्यात्मशब्दाच्च शिरःपक्षादयो न ब्रह्मगुणाः ॥ १५ ॥

श्रीः ॥ आत्मगृहीतिरितरवदुत्तरात् ॥ श्रीः ३ । ३ । १६ ॥

आत्मशब्देन ब्रह्मण एव ग्रहणमिति "सोऽकामयत बहुस्यां प्रजायेय" इत्युत्तरात् बहुभवनसङ्कल्पाभिधायिनो वाक्यादवगम्यते "आत्मा वाइदमेक एवाग्र आसीत्" इत्यात्मशब्दवत् ॥ १६ ॥

श्रीः ॥ अन्वयादिति चेत्स्यादवधारणात् ॥

श्रीः ३ । ३ । १७ ॥

पूर्वं प्राणमयादिष्वात्मशब्दान्वयात्कथमुत्तरान्निर्णय इति चेद् " आत्मन आकाशः सम्भूतः" इत्यवगतस्यात्मन एव प्राणमयादिष्ववधारणात्स्यादेव परमात्मैवेति निर्णयः ॥ १७ ॥

❀श्रीः ॥ कार्याख्यानादपूर्वम् ॥ श्रीः ३ । ३ । १८ ॥

"यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद" (क) इति प्राणविद्यां विधायाऽपाम

---

( क ) वाजसनेयके

प्राणवासस्त्वमुक्त्वा "तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामे-
* चदन्नमनग्नं कुरुते" (क) इत्याचमनस्याचारप्राप्तत्वादाचमनमनू-
द्याचमनीयानामपां प्राणवासस्त्वानुसन्धानमप्राप्तं विधीयते इति
युक्तम्। अप्राप्तस्यैव विधेयतया ख्यापनात् अत्रानुवादस्वरूपो
विधिः कल्प्येत इत्यर्थः ॥ १८ ॥ इति कार्याख्यानाधिकरणम्

## ❀श्रीः॥ समान एवं चाभेदात्॥ श्रीः ३ । ३ । १९॥

अग्निरहस्ये (वाजसनेयके) *बृहदारण्यके चाम्नाता हि शाण्डि-
ल्यविद्या एकत्र "स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं
सत्यसङ्कल्पमाकाशात्मानम्" (ख) इति, इतरत्र "मनोमयोऽयं पुरुषो
भास्सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवोवा स एष सर्वस्य
वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति" (ग) इति
उभयत्र मनोमयत्वादिके समाने सति वशित्वादेः सत्यसङ्कल्पत्व-
विततिरूपेणात्राभेदाद्विद्यैकयम् ॥ १९ ॥ इति समानाधिकरणम्

## ❀श्रीः ॥ सम्बन्धादेवमन्यत्रापि॥ श्रीः ३ ।३। २० ॥

"य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिणि"
इत्युपक्रम्य सत्यस्य ब्रह्मण आदित्यमण्डलेऽक्षिणि चोपास्यत्व-
मुक्त्वा "तस्योपनिषदहरित्यधिदैवतम् "तस्योपनिषदहमि-

---

* देतमेव तदनमनग्नमित्यादि तै० पा०

( क ) वाजसनेयके

* (वाजसनेयके) इत्येतन्नान्ध्रपुस्तके

( ख ) अग्निरहस्ये

( ग ) बृ० ७। ६

त्त्वध्यात्मम्"(क) इति द्वे नामनी आम्नायेते उभयत्रैकस्योपास्यस्य-सम्बन्धाद्विद्यैक्यमित्युभयत्रोभे नामनी ॥ २० ॥

श्रीः॥ नवा विशेषात् ॥ श्रीः ३ । ३ । २१ ॥

न ह्यादित्याक्षिस्थानसम्बन्धभेदादुपास्यभेदात् विद्याभेद*इति तत्र नियते नामनी ॥ २१ ॥

श्रीः॥ दर्शयति च ॥ श्रीः ३ । ३ । २२॥

दर्शयति च श्रुतिर्विद्याभेदं "तस्यैतस्यैतदेव रूपं यदमुष्य रूपम्" इति रूपातिदेशात् ॥ २२ ॥

श्री॥ सम्भृतिद्युव्याप्त्यपि चातः ॥ श्री ३।३।२३॥

" ब्रह्मज्येष्ठावीर्यासम्भृतानि ब्रह्माग्रेज्येष्ठं दिवमाततान" (ख) इत्यादिज्येष्ठानां वीर्याणां ब्रह्मणि सम्भृतिर्द्युव्याप्तिश्च ब्रह्मण इत्येतदनारभ्याधीतमपि, न सर्वोपासनशेषभूतम् । अतो द्युव्याप्तिसामर्थ्याद्दल्पस्थानव्यतिरिक्तेषूपासनेषु प्राप्नोति. सम्भृत्याद्यपि द्युव्याप्तिसहपठितं तत्रैव ॥ २३ ॥ इति सम्भृत्यधिकरणम्

श्रीः ॥ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥
श्रीः ३ । ३ । २४ ॥

छान्दोग्ये तैत्तिरीयके चाम्नाता पुरुषविद्या भिन्ना यजमानपत्न्यादीनां यज्ञावयवानामितरेषां सवनत्रयादीनाञ्चैकत्राऽऽम्नातानामन्यत्रानाम्नानात् फलभेदाच्च तैत्तिरीयके आत्मादीनां यजमान-

( क ) बृ० ७।५।३
*उपास्यस्यविद्याभेद इति तै०पा०

( ख ) अष्ट० २ प्र० ४ अनु० ७

त्वादिकल्पनं सायंप्रातर्मध्यन्दिनानां सवनत्वादिकल्पनं ब्रह्ममहिमप्राप्तिफलम्, अत्र * फलस्याश्रवणात्पूर्वप्रस्तुतफलं ब्रह्मविद्याङ्गं छान्दोग्ये चाशिषादीनां दीक्षात्वकल्पनं त्रेधाविभक्तपुरुषस्यायुषः सवनत्रयत्वकल्पनम् "शतं जीवति" (क) इति च फलम् ॥ २४ ॥

इति पुरुषविद्याधिकरणम्

## ❀श्रीः ॥ वेधाद्यर्थभेदात् ॥ श्रीः ३ । ३ । २५ ॥

उपनिषदारम्भेष्वधीतम् "शुक्रं प्रविध्य हृदयं प्रविध्य,, (ख) इत्यादिमन्त्रवत् महाव्रतादि (ग) कर्मवच्च "शन्नो मित्रः" (घ) "सहनाववतु" (ङ) इति मन्त्रावपि मन्त्रसामर्थ्येन *प्रयोजनभेदावगमादध्ययनशेषभूताविति न विद्याङ्गभूतौ ॥ २५ ॥ इति वेधाद्यधिकरणम्

## ❀श्रीः॥हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ श्रीः ३ । ३ । २६ ॥

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचनमेकस्यां शाखायां विदुषस्तच्चिन्तनार्थमधीतं विमुक्तयोः प्रवेशस्थानमेकस्यां शाखायां पुण्यप्रवेशस्थानं सुहृदः दुष्कृतस्य शत्रव इति एकस्यां शाखायां विमोचनं प्रवेशनं चेत्युभयमाम्नातं सर्वं तच्चिन्तनार्थं हानाविति प्रदर्शनार्थं हानावुपायने चेत्यर्थः । हानिर्विमोचनमुपायनं प्रवेशनं केवलहानावाम्नातायां केवले चोपायने माम्नाते इतरेतरसमुच्चयो-

---

* महाव्रतादीनांकर्मणाश्चाभिचारद्वादशाहादि षुविनियोगवत् ॥

( क ) छा० ३ । १६ । ७

( ख )

( ग ) मन्त्रवच्चेति तै० पा०

( घ ) तैत्ति० शिक्षाव०१।१

( ङ ) तैत्ति० भ० । १ ।

* ऋतंवदिष्यामि तेजस्विनावधीतमस्त्वितिमन्त्रसामर्थ्येन ।

न्याय्यो न विकल्पः। उपायनशब्दस्य हानिवाक्यशेषत्वात् तच्छेषत्वं च त्यक्तयोः प्रवेशस्थानवाचित्वेन तदपेक्षत्वात् यथा "वानस्पत्याः कुशाः"(क) इत्येतद्वाक्यशेषभूतम् "औदुम्बर्यः कुशाः"(ख) इति तद्विशेषपरम् * प्रदेशान्तरस्थम् यथा च "देवासुराणां छन्दोभिः (ग) इत्येतद्वाक्यशेषभूतम् "देवच्छन्दांसि पूर्वम्" ( घ ) इति प्रदेशान्तरस्थम्, यथा च "हिरण्येन षोडशिनः स्तोत्रमुपाकरोति" (ङ) इत्येतद्वाक्यशेषभूतम् "समयाविशिते सूर्ये षोडशिनः स्तोत्रम" (च) इति, यथाच "ऋत्विज उपगायन्ति" (छ) इत्येतच्छेषभूतम "नाध्वर्युरुपगायेत्" ( ज ) इत्येवमुपायनवाक्यस्य हानिवाक्यशेषतया सम्भवन्त्यां गतौ न विकल्पोन्याय्यः। तदुक्तम् "अपितुवाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य" ( झ ) इत्यादिना ॥ २६ ॥

## ❀श्रीः ॥ साम्पराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ श्रीः ३ । ३ । २७ ॥

सुकृतदुष्कृतयोर्हानिः "अश्व इव रोमाणि विधूय धूत्वा शरीरम"(ञ) इति देहवियोगकाले श्रुता शाखान्तरे "समागच्छति विरजां नदीं तत्सुकृतदुष्कृते धुनुते" (ट) इत्यध्वन्यपि श्रुतापि साम्पराये चरमदेहवियोगकाले एव चिन्तनीया. देहवियोगादूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण तरितव्यभोगाभावात्. तथा ह्यन्ये शाखिनः

---

( क )
( ख )
* तद्विशेषपरमितिनान्ध्रपुस्तके ॥
( ग )
( घ )
( ङ )

( च ) का० ६ प्र० ६ प०४३
( छ )
( ज ) का० ६ प्र० ३ प० ६
( झ ) पूर्व मीमा०
( ञ ) छा० ८ । १३
( ट ) कौषी० १ । ४

"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति देहवियोगसमनन्तरं ब्रह्मप्राप्तिरभिधीयते ॥ २७ ॥

श्रीः ॥ छन्दत उभयाविरोधात् ॥ श्रीः ३।३।२८॥

देहवियोगकाले पुण्यपापविमोचनश्रुतेर्देहवियोगादूर्द्ध्वं ब्रह्मप्राप्तिश्रुतेश्चेत्युभयश्रुत्यविरोधाद्धेतोः "सुकृतदुष्कृते धुनुते" इत्येव श्रुतिखण्डः छन्दतो नेतव्यः "एतं देवयानं पन्थानमापद्यते" (क) इति वाक्यखण्डात्प्रागनुगमयितव्य इत्यर्थः ॥ २८ ॥

चोदयति —

श्रीः ॥ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥

श्रीः ३ । ३ । २९ ॥

देवयानगतिश्रुतेरर्थवत्त्वमुभयत्र चिन्तायामेव अन्यथा देहवियोगकाले एव चिन्तायां तस्मिन्नेव सर्वकर्मक्षयाद्देहाभावेन गतिर्नोपपद्यते इति गतिश्रुतिविरोधः ॥ २९ ॥

परिहरति —

श्रीः ॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥

श्रीः ३ । ३ । ३० ॥

देहवियोगकाले सर्वकर्मक्षयेऽपि गतिविधिरुपपन्नः ब्रह्मोपासीनानामकर्मलक्ष्यार्थोपलब्धेः "स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति"(ख)इत्यादौ यथा लोके राजानमुपासीनानामितरपुरुषासाधारणसर्वार्थसिद्धिर्हि ॥ ३० ॥

---

(क) कौषी० १ । ३ | (ख) ७ । २५ । २

श्रीः॥ यावदधिकारमवस्थितिराधिकारिकाणाम् ॥

श्रीः ३ । ३ । ३१ ॥

वसिष्ठादीनां ज्ञानिनामपि देहपातादूर्ध्वं फलान्तरानुभवः प्रारब्धाधिकारहेतुकर्माविनाशात् . अतो यावदधिकारसमाप्तिस्तद्धेतुकर्मफलानुभवाय तेषां तत्रैव स्थितिः नार्चिरादिप्राप्तिः ज्ञानिनामपि हि प्रारब्धकर्माऽनुभवेनैव नश्यतीति वक्ष्यते ॥ ३१ ॥

❀श्रीः ॥अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ श्रीः ३ । ३ । ३२ ॥

एषूपकोशलादिषूपासनेष्वर्चिरादिगतिराम्नाता, तन्निष्ठानामेव तया प्राप्तिरिति तच्चिन्तनमपि तेषामेवेति नियमाभावः । अपि तु सर्वोपासननिष्ठानां तथा सत्येव श्रुतिस्मृतिभ्यामविरोधः श्रुतिस्तावत् पञ्चाग्निविद्यायाम "येचेमेऽरण्येश्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति,, (क)इत्यविशेषेण श्रुता. स्मृतिरपि "अग्निर्ज्योतिरहः शुक्लः" (ख) इत्यादिका ॥ ३२ ॥ इत्यनियमाधिकरणम

श्रीः॥अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ श्रीः ३ । ३ । ३३ ॥

"एतद्वै तदक्षरम" "अथ परा यया तदक्षरम्" इत्यारभ्य, "अस्थूलमनण्वह्रस्वमदीर्घमलोहितं यत्तदद्रेश्यमग्राह्यम" इत्याद्यस्थूलत्वाद्रेश्यत्वादिविषयाणामक्षरब्रह्मसम्बन्धिनीनां धियां सर्वासु

---

(क) बृ० ८ । २ । १५ | (ख) गी० ८ । २४

परविद्यासु सङ्ग्रहः, गुणिनो ब्रह्मणः सर्वत्रैकत्वात्, एतैर्गुणैर्विना सकलेतरव्यावृत्तब्रह्मानुसन्धानानुपपत्तेश्च. हेयसम्बन्धानर्हानन्दादयो हि प्रत्यगात्मनो ब्रह्मव्यावर्तकाः प्रधानानुवर्तित्वं हि गुणानां स्वभावः. यथा जामदग्न्यचतुरात्रपुरोडाश्युपसद्गुणभूतमन्त्रस्य प्रधानभूतोपसदनुवर्तित्वेन उपांशुगुणकत्वम् तदुक्तम्. "गुणमुख्यव्यतिक्रमे" (क) इत्यादिना ॥ ३३ ॥

नैतावता सर्वत्र सर्वोपसंहारप्राप्तिरित्याह –

## श्रीः ॥ इयदामननात् ॥ श्रीः ३ । ३ । ३४ ॥

आमननमाभिमुख्येन मननम्. इयदेव गुणजातं सर्वत्रोपसंहार्यम्. येन गुणजातेन सकलेतरव्यावृत्तब्रह्मामननम् (ख) तदेव सर्वत्रानुसन्धेयम् ॥ ३४ ॥ इत्यत्तर्व्यधिकरणम्

## ❀श्रीः॥अन्तराभूतग्रामवत् स्वात्मनोऽन्यथाभेदाऽनुपपत्तिरिति चेन्नोपदेशवत् ॥ श्रीः ३ । ३ । ३५ ॥

"य आत्मा" (ग) इत्युषस्तिप्रश्नीभूतग्रामवत् प्रत्यगात्मविषयः अन्यथा "यः प्राणेन प्राणिति स त आत्मा" इति प्रतिवचनस्य कहोलविषयादशनायाद्यतीतत्वादेर्भेदानुपपत्तिरितिचेन्न, "य आत्मा सर्वान्तरः" इत्युभयत्र प्रश्नैकरूपत्वात् परमात्मैवोभयत्र. प्रतिवचनगतप्राणनादिहेतुत्वमशनायाद्यतीतत्वञ्च, परमात्मन्येवोपपद्यते

---

( क ) पूर्वमी०

( ख ) तदेव सर्वत्रानुसन्धेयमिति नान्ध्रपुस्तके ।

( ग ) बृह० ५ । ४ । १

प्राणनादिहेतुत्वं हि परात्मन एव " को ह्येवान्यात् कः प्राण्यात् " इत्यादिश्रुतेः सद्विद्योपदेशवत्, प्रश्नप्रतिवचनावृत्तिरेकविषया ॥ ३५ ॥

पृष्टभेदेऽपि न भेद इत्याह—

श्रीः ॥ व्यतिहारो विशिंषन्ति हीतरवत् ॥

श्रीः ३ । ३ । ३६ ॥

अर्थैक्ये निश्चिते सति पृष्ट्रोर्बुद्धिव्यतिहारः कार्यः, उषस्तिनाऽश्ना- नायाद्यतीतत्वधीः कार्या, कहोलेनापि प्राणनादिहेतुत्वधीः कार्या. उभयत्र प्रकरणगतवाक्यानि परमात्मानमेव विशिंषन्ति. यथेतरत्र सद्विद्यायामपि ॥ ३६ ॥

प्रश्नाद्यावृत्तौ कथमैक्यमित्यत्राह—

श्रीः ॥ सैव हि सत्यादयः ॥ श्रीः ३ । ३ । ३७ ॥

" सेयन्देवतैक्षत " (क) इति प्रस्तुता देवतैव सर्वत्र प्रश्नगता. प्रतिवचनेषु च " तत्सत्यं स आत्मा " इत्यादय इत्यैक्यम् ॥ ३७ ॥

❀श्रीः ॥ कामादीतरत्र तत्र चायतनादिभ्यः ॥

श्रीः ३ । ३ । ३८ ॥

" दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् " इत्युक्त्वा " एष आत्माऽपहतपाप्मा " इत्यारभ्य, " सत्यकामः सत्यसङ्कल्पः " इति छान्दोग्ये, वाजिनाञ्च " स एषोन्तर्हृदय आकाशस्तस्मिञ्छेते " " सर्वस्य वशी सर्वस्येशानः " इत्युभयत्र हृदयायतनत्वसत्यसङ्कल्पत्व- तद्विशेषरूपवशित्वादिभिर्दहरविद्याप्रत्यभिज्ञानात् सत्यसङ्कल्पत्व-

---

(क) छा० ६ । ३ । १

सहचारिणोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्ता उभयत्रोप-संहर्तव्याः ॥ ३८ ॥

## श्रीः ॥ आदरादलोपः ॥ श्रीः ३ । ३ । ३९ ॥

"नेह नानास्ति किञ्चन,, "सएषनेतिनेत्यात्मा" (क)इति निषेधो न वशित्वादिगुणविषयः "सर्वस्य वशी सर्वस्येशानः" इति तेषामज्ञा-तानां* गुणानामादरेण विधानात्. अतो न लोपः सर्वस्य ब्रह्मकार्य-त्वैकत्वात् "नेह नानास्ति" इत्यत्राऽब्रह्मात्मकनानात्वं प्रतिषिध्यते "स एष नेति नेत्यात्मा" इति च प्राकृतविशेषनिषेधविषयः ॥३९॥

## श्रीः ॥ उपस्थितेतस्तद्वचनात् ॥ श्रीः ३ । ३ । ४०॥

उपस्थिते ब्रह्मोपसम्पन्ने, अतः सम्पत्तेरेव हेतोः "यत्तन् क्रीडन् रममाणः" इत्यादिना छन्दतो जात्यादिप्राप्त्यभिधानात्साक्षान्मोक्ष-फलं तत् न सांसारिकफलमिति पराविद्यैवैषा सगुणा ॥ ४० ॥

इतिकामाधिकरणम्

## ❀श्रीः ॥ तन्निर्द्धारणाऽनियमस्तद्दृष्टेः ॥

## श्री ३ । ३ । ४१ ॥

(पृथक्कृत्य प्रतिबन्धः फलम्) (१) उद्गीथाद्युपासनस्य क्रतुषु गोदोहनादिवदुपासनाऽनियमः "तेनोभौ कुरुतोयश्चैतदेवं वेद यश्च न वेद,, ( ख ) इत्युद्गीथोपासनरहितस्यापि तदनुष्ठानदर्शनात् "यदे-व विद्यया करोति तदेव वीर्यवत्तरम्" इति वर्त्तमाननिर्द्देशे-ऽपि क्रतोर्वीर्यवत्तरत्वसाधनतया उपासनविधिः कल्प्यते । वीर्य-

---

( क ) बृ० ६ । ४ । २२

* गुणानामिति नान्ध्रपुस्तके

(१) इत्यन्तः पाठः केवलं ( ख ) पुस्तके ।

( ख ) छा० १ । १ । १०

वस्तरत्वं नाम प्रबलकर्मान्तराप्रतिबन्धेन विलम्बितफलत्वम्. अतः क्रतुफलात् पृथक् फलमुद्गीथोपासनमित्यनियमः ॥ ४१ ॥

❀श्रीः ॥ प्रदानवदेव तदुक्तम् ॥ श्रीः ३ । ३ । ४२ ॥

दहरविद्यायाम् अपहतपाप्मत्वादिगुणविशिष्टोपासने, तत्तद्गुण विशिष्टस्वरूपभेदात् प्रतिगुणं गुणयावृत्तिः "इन्द्राय राज्ञे,, ( क ) इत्यादिषु विशिष्टस्वरूपभेदात् प्रदानावृत्तिवत्. तदुक्तम् "नाना वा देवता पृथक्त्वाद्" ( ख ) इति ॥ ४२ ॥ इतिप्रदानाधिकरणम्

❀श्रीः ॥ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥

श्री ३ । ३ । ४३ ॥

"सहस्रशीर्षं देवम्,, ( ग ) इत्यत्र नारायणशब्देन प्रकृतदहरविद्योपास्यमात्रं न विशिष्यते, अपि तु सर्वपरविद्यासूपास्यम्, तच्चिन्हभूतवाक्यभूयस्त्वादेवाक्षरशिवशम्भुपरब्रह्मादिशब्दैः सर्वोपास्याननूद्य नारायणत्वं हि विधीयते, 'प्रकरणाद्धि वाक्यं बलीयः' तदपि "श्रुतिलिङ्ग" (घ) इत्यादिनोक्तम् ॥ ४३ ॥

इतिलिङ्गभूयस्त्वाधिकरणम्

❀श्रीः ॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ श्रीः ३ । ३ । ४४ ॥

"मनश्चितो वाक्चितः प्राणचितः" (ङ) इत्यादि साम्पादिका-

---

( क ) काण्ड० २ प्र० ३ अनु० ६

( ख ) साङ्कर्षणे

( ग ) तै० ना० ६ । ११

( घ ) पूर्वमी०

( ङ ) वाजसनेयके । अग्निरहस्ये

श्निनाम् "असद्वा इदमग्र आसीत्" इत्यादिना पूर्वप्रकृतेष्टकचिताग्नि-शेषिभूतक्रियामयक्रत्वनुप्रवेशः स्यात्, एषामग्नित्वेनेष्टकचिता-ऽग्निना विकल्पः, द्वादशाहाङ्गभूतमानसग्रहवदेषाम्मानसानामपि-क्रियामयक्रत्वङ्गत्वं न विरुद्धम् ॥ ४४ ॥

श्रीः ॥ अतिदेशाच्च ॥ श्रीः ३ । ३ । ४५ ॥

"तेषामेकैक एव तावान् यावानसौ पूर्वः" ( क ) इतीष्टकचिताग्निकार्यातिदेशाच्च तदङ्गत्वम् ॥ ४५ ॥

श्रीः ॥ विद्यैव तु निर्द्धारणात् दर्शनाच्च ॥

श्रीः ३ । ३ । ४६ ॥

विद्यैवैते, विद्यामयक्रत्वङ्गभूता इत्यर्थः साम्पादिकाऽग्नित्वेनैषां विद्यामयत्वे सिद्धेऽपि "ते हैते विद्याचित एव" (ख) इति निर्द्धारणं हि विद्यामयक्रत्वन्वयेन विद्यामयत्वख्यापनाय. दृश्यते चात्र-विद्यामयः क्रतुः "मनसैषुग्रहाः अगृह्यन्त" (ग) इत्यादिषु ॥ ४६ ॥

श्रीः ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥

श्रीः ३ । ३ । ४७ ॥

"ते हैते विद्याचित एव विद्यया हैवैते एवंविदश्चिता भवन्ति" (घ) इति श्रुत्या वाक्येन चाऽवगतविद्यामयक्रत्वन्वयस्य दुर्बलप्रकरणेन न बाधः ॥ ४७ ॥

---

( क )
( ख )
( ग )
( घ )

श्रीः ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च-
तदुक्तम् ॥ श्रीः ३ । ३ । ४८ ॥

"मनसैव ग्रहा अगृह्यन्त ,, (क) इत्यादिकैस्त्वनुबन्धैः "ते हैते विद्याचितएव" इति श्रुत्या चात्र विद्यामयक्रतुविधिः कल्प्यत इति. दहरविद्यादीनां क्रियामयत्वात्पृथक्त्ववत्, अस्यापि विद्यामयक्रतोः सानुबन्धैः पृथक्त्वमवगम्यते. दृष्टश्चानुवादसरूपेऽपि*विधिः "यदेव विद्यया करोति,,इत्यादौ तदुक्तम् "वचनानि त्वपूर्वत्वात्,, (ख) इति ॥ ४८ ॥

श्रीः ॥ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि-
लोकापत्तिः ॥ श्रीः ३ । ३ । ४९ ॥

"तेषामेकैक एव तावान् यावानसौ" इतीष्टकचिताग्नि-फलसामान्ये नातिदेशः इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलम्, तदेवैषां विद्यामयक्रत्वनुप्रवेशेन फलमिति; न पुनरिष्टकचिता-तिदेशकत्वमप्येषामिति. येन केनापि सामान्येनाप्यतिदेशो-पलब्धेः यथा"स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः,, (ग) इति सर्वहरत्वमात्रेण न हि तत्र मण्डलपुरुषस्य मृत्यु-देशत्वम् ॥ ४९ ॥

श्रीः ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वा-
त्त्वनुबन्धः ॥ श्रीः ३ । ३ । ५० ॥

परेण च ब्राह्मणेनास्य मनश्चितादिवाचिनः शब्दस्य विद्यामय-

---

( क )

( ख ) पूर्वमी०

* सरूपोविधिरितिपाठान्तरम्

( ग )

क्रतुप्रतिपादितत्वमवगम्यते "अयं वाव लोक एषोऽग्निचितस्तस्याप एव,, ( क ) इत्यादिना पृथक्फला विद्यैव विधीयते, क्रियाप्रकरणे अग्निरहस्ये मनाश्चितादीनामनुबन्धस्तु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात् ॥ ५० ॥

❀श्रीः ॥ एक आत्मनः शरीरे भावात् ॥

श्रीः ३ । ३ । ५१ ॥

शरीरे वर्तमानत्वादुपासितुस्तस्य च कर्तृत्वभोक्तृत्वादिस्वरूपत्वात्, तथावस्थितस्यात्मतया परविद्यासु परमात्मोपास्य इति केचन मन्यते ॥ ५१ ॥

श्रीः ॥ व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥

श्रीः ३ । ३ । ५२ ॥

नैवम्, यत्कर्तृत्वादिस्वरूपस्यैवोपासितुरात्मतया परमात्मानुसन्धेय इति. अपि तु उपासितुः सांसारिक * स्वरूपान्मुक्तस्वरूपस्य यो व्यतिरेकः अपहतपाप्मत्वादिगुणकत्वरूपः सोऽनुसन्धेयः तथानुसन्धानसद्भावभावित्वात्स्वरूपोपलब्धेः यथावस्थितस्वरूपब्रह्मानुसन्धानभाविब्रह्मोपलब्धिस्तद्वत् "यथा क्रतुरस्मिँल्लोके पुरुषः,, ( ख ) इत्यादिश्रुतेः ॥ ५२ ॥ इति शरीरेभावाधिकरणम्

❀श्रीः॥ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥

श्रीः ३ । ३ । ५३ ॥

उद्गीथादिकत्वङ्गाश्रया उपासना यासु शाखासु श्रूयन्ते, तास्वेव

---

( क )

* स्वभवान्मुक्तस्वरूपस्येति तै० पु० पा०

( ख ) छा० ३ । ४ । १ ।

कार्या इति नेहास्ति नियामकम्; अत उद्गीथाऽनुबन्धित्वात् प्रतिशाखं कार्याः ॥ ५३ ॥

## श्रीः ॥ मन्त्रादिवद्वाऽविरोधः ॥ श्रीः ३ । ३ । ५४॥

वा शब्दोऽवधारणे यथा क्रत्वङ्गभूतानां मन्त्राणामेकैकशाखागतानामपि सर्वशाखा गतक्रत्वन्वयेनाविरोधः ॥ ५४ ॥

## ❀श्रीः ॥भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ श्रीः ३ । ३ । ५५ ॥

वैश्वानरविद्यायां त्रैलोक्यशरीरतया उपास्यस्य द्युलोकादिपृथिव्यन्तानां वैश्वानरात्मनो मूर्द्धादिपादान्तावयवत्वमभिधाय, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु"(क)इत्यादिना ब्रह्मानुभवः फलश्चाभिहितं तत्र मूर्द्धाद्यवयवोपासनाद् भूम्नः समस्तोपासनस्य ज्यायस्त्वं प्रामाणिकमस्ति तत्रैव ब्रह्मानुभवफलाभिधानात् तत्रावयवोपासनं तत्र तत्र फलकीर्तनं च क्रतावित्र द्रष्टव्यं यथा "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्युक्त्वा "यदष्टाकपालोभवति " ( ख ) इत्यादौ तथा समस्तोपासनस्य श्रेष्ठयं दर्शयति श्रुतिः "दिवमेव भगवो राजन् ( ग ) इत्यवयवोपासनेऽभिहिते " मूर्द्धा ते व्यपतिष्यत् यस्मान्नागमिष्य" (घ) इत्यादिना अनर्थं ब्रुवन्ती ॥ ५५ ॥

---

( क ) छा० ५ । १८ । १ ।
( ख ) का०२ प्र०२ अनु० ५
( ग ) छा० ५ । १२ । १ ।
( घ ) छा० ५ । १२ । २ ।

भूमज्यायस्त्वाधिकरणम्

❀श्रीः ॥ नानाशब्दादिभेदात् ॥ श्रीः ३ । ३ । ५६॥

सद्विद्याभूमविद्यादीनां ब्रह्मण एकस्यैवोपास्यत्वे तत्प्राप्तेरेव फलत्वेऽप्युपास्यप्रकारभेदाद्विद्याभेदः। प्रकारभेदश्च, शब्दान्तराद्यनुबन्धभेदादवगम्यते. पूर्वकाण्डोदितमपि ज्ञानस्याविधेयतां ब्रुवतां निरसनाय पुनरारब्धम् ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम्

❀श्रीः ॥ विकल्पोऽविशिष्टफलत्वात् ॥

श्रीः ३ । ३ । ५७ ॥

एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्पः। अपरिच्छिन्नानन्दरूपब्रह्मानुभवफलस्याऽविशिष्टत्वात् ॥ ५७ ॥

श्रीः ॥ काम्यास्तु यथाकामं समुच्चीयेरन्न वा

पूर्वहेत्वभावात् ॥ श्रीः ३ । ३ । ५८ ॥

ब्रह्मव्यतिरिक्तविद्याफलस्य परमितत्वाद्भूयस्त्वापेक्षया समुच्चयः सम्भवतीति यथाकामं समुच्चीयेरन्. विकल्पेरन्न वा ॥ ५८ ॥

इति विकल्पाधिकरणम्

❀श्रीः॥ अङ्गेषु यथाश्रयभावः॥ श्रीः ३ । ३ । ५९॥

"उद्गीथमुपासीत,, (क) इत्युद्गीथाद्यङ्गाश्रितानामुद्गीथादिवत् क्रत्वङ्गभाव एव. गोदोहनादिवत् स्ववाक्ये फलान्तराश्रवणात् उद्गीथादिसम्बन्धितया क्रत्वङ्गभावो न विरुध्यत इति ॥ ५९ ॥

---

( क ) छा० १ । १ । १ ।

श्रीः ॥ शिष्टेश्च ॥ श्रीः ३ । ३ । ६० ॥

"उद्गीथमुपासीत,, इति विधेः "यदेव विद्यया करोति,, इत्यत्र विध्यभावाच्चाङ्गभावो न विरुद्धः ॥ ६० ॥

श्रीः ॥ समाहारात् ॥ श्रीः ३ । ३ । ६१ ॥

"उद्गीथमनुसमाहरति,, ( क ) इति वेदनहानावव्यन्येन समाधानं ब्रुवत् वेदनस्याङ्गतां द्योतयति ॥ ६१ ॥

श्रीः ॥ गुणसाधारण्यश्रुतेश्च ॥ श्रीः ३ । ३ । ६२ ॥

प्रकृतस्योपासनस्यैव "ओमित्याश्रावयति ओमितिशंसति ओमित्युद्गायति" ( ख ) इति सर्वत्र सञ्चरतः प्रणवस्य गुणत्वेनोपासनस्यापि सञ्चारादुपासनोपादाननियमोऽवगम्यते अतः पूर्वोक्तोपादानानियमो न सम्भवतीति ॥ ६२ ॥

श्रीः॥ न वा तत्सहभावाश्रुतेः॥ श्रीः ३ । ३ । ६३ ॥

नैतत्. अङ्गभावाश्रुतेः । अङ्गभावो हि सहभावः "यदेव विद्यया करोति तदेव वीर्यवत्तरम्" इति फलान्तरसाधनतयाऽवगतस्योपासनस्यानङ्गभावः ( ग ) "उद्गीथमुपासीत" इत्युद्गीथाश्रयतामात्रप्रतिपादनात् ॥ ६३ ॥

---

( क ) छा० १ । ४ । ५

( ख ) छा० १ । १ । ६

( ग ) उपासनस्याङ्गभावासम्भवादिति तै० पु० पा०

श्रीः ॥ दर्शनाच्च ॥ श्रीः ३ । ३ । ६४ ॥

"एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" (क) इति ब्रह्मणो वेदनेन सर्वरक्षणं ब्रुवन्ती श्रुतिरुद्गातृप्रभृतीनां वेदनस्यानङ्गतां दर्शयतीत्युपासनोपादानानियमः सिद्धः॥ ६४ ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे तृतीयाध्यायस्य तृतीय : पादः । ३ ॥

———*———

पादेऽस्मिन् सूत्राणि चतुःषष्टिः ॥ ६४ ॥
अधिकरणानि च षड्विंशतिः ॥ २६ ॥
हरिः ओम् तत्सत् ।

———

श्रीमद्वेङ्कटनाथार्याः खल्वेवमाहुः
जडमतिमुखादन्तादन्तिव्यथौषधिसिद्धयः ।
प्रमितिनिधयः प्रज्ञाशालिप्रचालनपद्धयः ॥
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदाः ।
यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्तयः ॥

——*-*—*-*——

मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभाः ।
मुमुक्षामक्षोभ्यां ददति मुनि बृन्दारकगिरः ॥
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिषद्दिवाभीतप्रेक्षा-
दिनकरसमुत्थानपरुषाः ॥

---

(क) छा० ४ । १७ । १०

श्रीमते रामानुजाय नमः ॥

श्रीपार्थसारथये नमो नमः ॥

—*—०—*—

॥ तृतीयाध्याये चतुर्थपादारम्भः ॥

## श्रीः ॥ पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ श्रीः ३ । ४ । १ ॥

विद्यातः पुरुषार्थ इति भगवान् बादरायणो मेने "ब्रह्मविदाप्नोति परम्" "यो वेद...सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा" इत्यादिशब्दात् ॥ १ ॥

## श्रीः ॥ शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ श्रीः ३ । ४ । २ ॥

"तत्त्वमसि,, इत्यादिसामानाधिकरण्येन कर्मसु कर्तुरेव ब्रह्मत्वाऽवगमात्, तद्वेदनस्य तत्संस्कारतया कर्मशेषत्वात्, द्रव्यादिष्विव फलश्रुतिरर्थवादः ॥ २ ॥

## श्रीः ॥ आचारदर्शनात् ॥ श्रीः ३ । ४ । ३ ॥

अश्वपतिः केकयो ब्रह्मवित् "यक्ष्यमाणो ह वै भगवन्तोऽहम्" (क) इत्यादौ ब्रह्मविदः कर्मप्रधानाचारदर्शनात् विद्याकर्माङ्गम् ॥ ३ ॥

## श्रीः ॥ तच्छ्रुतेः ॥ श्रीः ३ । ४ । ४ ॥

"यदेव विद्यया करोति,, इतिश्रुत्यैव विद्यायाः कर्मसु विनियो-

(क) छा० ५ । ११ । ५

गात्. यत्करोति तद्विद्यया,, इति हि श्रुतिः यद्विद्यया साधनभूतया कर्म करोति तत्कर्म वीर्यवत्तरमिति वा ॥ ४ ॥

श्रीः ॥ समन्वारम्भणात् ॥ श्रीः ३ । ४ । ५ ॥

"तं विद्याकर्मणी समन्वारभेते" ( क ) इति विद्याकर्मणोरेकस्मिन् पुरुषे साहित्यदर्शनाच्च, विद्याकर्म्माङ्गम् ॥ ५ ॥

श्रीः ॥ तद्वतो विधानात् ॥ श्रीः ३ । ४ । ६ ॥

"आचार्यकुलाद्वेदमधीत्य...अभिसमावृत्य कुटुम्बे" (ख) इत्यादौ अर्थज्ञानपर्यन्ताध्ययनवतः कर्मविधानाच्च, अध्ययनं ह्यर्थज्ञानपर्यन्तम् ॥ ६ ॥

श्रीः ॥ नियमाच्च ॥ ३ । ४ । ७ ॥

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः,, (ग) इत्यात्मविदो जीवनस्य कर्मसु विनियोगाच्च ॥ ७ ॥

श्रीः ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ श्रीः ३ । ४ ८ ॥

न विद्या कर्माङ्गम्, अपि तु विद्यातः पुरुषार्थ इत्येवमेव भगवतोबादरायणस्य मतम. कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्यैव वेद्यतयोपदेशात् तत् कथम् ? "बहुस्यां प्रजायेयेति" "सकारणं करणाधिपाधिपः" इत्यादिवाक्येषु वेद्यस्याधिकयदर्शनात् ॥ ८ ॥

श्रीः ॥ तुल्यं तु दर्शनम् ॥ श्रीः ३ । ४ । ९ ॥

विद्यायाः प्राधान्ये तुल्यमाचारदर्शनम् "ऋषयः कावषेयाः

---

( क ) बृ० ६ । ४ । २
( ख ) छा० ८ । १५ । १
( ग ) ईशावास्योप० २

किमर्था वयमध्येष्यामहे" (क)इत्यादौ ब्रह्मविदां कर्मत्यागो हि दृश्यते अनुष्ठानं तु फलाभिसन्धिरहितस्य विद्याङ्गत्वेन. त्यागस्तु फलाभिसन्धियुक्तस्य विरोधित्वादिति न विरोधः ॥ ९ ॥

श्रीः ॥ असार्वत्रिकी ॥ श्रीः ३ । ४ । १० ॥

"यदेव विद्यया करोति" इति न सार्वत्रिकी विद्योच्यते "यदेवविद्ययाकरोति" इति प्रसिद्धवन्निर्देशात्. प्रसिद्धिश्चोद्गीथविद्यायाः "यदेव विद्ययाकरोति...तदेव वीर्यवत्तरम्भवति,, इति प्रकृतोद्गीथविद्यायुक्तस्य कर्मणो हि वीर्यवत्तरत्वसाधनभावो विधीयते ॥ १० ॥

श्रीः ॥ विभागः शतवत् ॥ श्रीः ३ । ४ । ११ ॥

"तं विद्याकर्मणी समन्वारभेते,, इति विद्याकर्मणोर्भिन्नफलत्वेन स्वस्मै स्वस्मै * फलायान्वेतीति विभागः यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्यत्र क्षेत्रार्थं शतम् रत्नार्थं शतमिति ॥ ११ ॥

श्रीः ॥ अध्ययनमात्रवतः ॥ श्रीः ३ । ४ । १२ ॥

"वेदमधीत्य" (क) इत्यध्ययनमात्रवतः कर्मविधानात् न विद्या कर्माङ्गम् अध्ययनविधिर्ह्यक्षरराशिग्रहणमात्रे पर्यवस्यतीत्युक्तम् अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता 'विद्यादुपासीत, इति विहिता विद्या प्रत्ययावृत्तिरूपा ॥ १२ ॥

श्रीः ॥ नाविशेषात् ॥ श्रीः ३ । ४ । १३ ॥

"कुर्वन्नेवेह कर्माणि" इत्यत्र स्वतन्त्रे कर्मणि विद्वदायुषो विनियोग इति विशेषहेत्वभावात् " ईशावास्यमिदं सर्वम्" ( ख ) इति

---

* तै० पुस्तके वीप्साभावः ॥

( क ) छा० ८ । १५ । १

( ख ) ईशोपनिषदि १

प्रकरणाच्च विद्याङ्गभूतमेव तत् कर्मेति ज्ञायते अतो न विद्या-कर्माङ्गम् ॥ १३ ॥

## श्रीः ॥ स्तुतयेऽनुमतिर्वा ॥ श्रीः ३ । ४ । १४ ॥

विद्यास्तुतये कर्मानुमतिर्वा. विद्यामाहात्म्यात्सर्वदा कर्म कुर्वन्नपि तैर्न लिप्यते इति हि विद्या स्तुता स्यात्.*"न कर्मणालिप्यते नरः" (क) इति वाक्यशेषः ॥ १४ ॥

## श्रीः ॥ कामकारेण चैके ॥ श्री ३ । ४ । १५ ॥

"किं प्रजया करिष्यामः"(ख)इत्यादिना कामकारेण गार्हस्थ्यत्यागमधीयत एके; अतश्च विद्यैव प्रधानभूता ॥ १५ ॥

## श्रीः ॥ उपमर्दश्च ॥ श्री ३ । ४ । १६ ॥

विद्यया कर्मोपमर्दं चाधीयत एके "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (ग) इत्यादिना ॥ १६ ॥

## श्रीः ॥ उर्द्ध्वरेतस्सु च शब्दे हि ॥ श्रीः ३ । ४ १७ ॥

उर्द्ध्वरेतस्स्वाश्रमेषु च विद्यादर्शनात्तेषु चाग्निहोत्रादिकर्माभावात् न विद्या कर्माङ्गं ते चाश्रमाः सन्त्येव "त्रयो धर्मस्कन्धाः"(घ) इत्यादौ वैदिके शब्दे दृश्यते ॥ १७ ॥

---

* नकर्मलिप्यतेनरे इतिपाठा० (ख) पुस्तकेतुनकर्मभिरितिपा०

( क ) ईशोप० १

( ख ) बृ० ६ । ४ । २२

( ग ) मुण्डकोप० २ । २ । ८

( घ ) छा० २ । २३ । १

श्रीः ॥ परामर्शं जैमिनिरचोदनाच्चाऽपवदति हि ॥

श्रीः ३ । ४ । १८ ॥

" त्रयो धर्मस्कन्धाः " इत्यत्र चोदनाभावादुपासनस्तुत्यर्थमनुवादमेवेति जैमिनिर्मेने. "वीरहा वा एष देवानां योऽग्निमुद्वासयते" (क) इत्यपवदति चाश्रमान्तरम् ॥ १८ ॥

श्रीः ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥

श्रीः ३ । ४ । १९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयमिति * भगवन्मतम् ''त्रयोधर्मस्कन्धाः" इति साम्यश्रुतेः ॥ १९ ॥

श्रीः ॥ विधिर्वा धारणवत् ॥ श्रीः ३ । ४ । २० ॥

" उपरि हि देवेभ्यो धारयति" (ख) इत्यत्राप्राप्तत्वेन यथा विधिस्तद्वत् ॥ २० ॥

श्रीः ॥ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥

श्रीः ३ । ४ । २१ ॥

उद्गीथादिषु रसतमत्वादिदृष्टिविधिर्न सम्भवति " इयमेव जुहूस्स्वर्गो लोक आहवनीयः" (ग) इतिवत्, कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्ववचनं तत्स्तुतिमात्रमिति चेन्नैतत्. जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात्, रसतमत्वादेश्चाप्राप्तत्वाद्रसतमत्वादिदृष्टिविधिरेव ॥ २१ ॥

---

( क ) का० १प्र० ५अनु०२ | ( ख )
* बादरायणमतमिति तै०पा० | ( ग )

श्रीः ॥ भावशब्दाच्च ॥ श्रीः ३ । ४ । २२ ॥

" उद्गीथमुपासीत " इति विधिप्रत्ययाच्च ॥ २२ ॥

इति स्तुतिमात्राधिकरणम्

❀श्रीः ॥ पारिप्लवार्था इति चेन्न, विशेषितत्वात् ॥

श्रीः ३ । ४ । २३ ॥

वेदान्तेषु तत्तद्विद्यारम्भे अधीताः " प्रतर्दनो ह वै " ( क ) इत्याद्याख्यायिकाः पारिप्लवार्थाः " आख्यानानि शंसन्ति " ( ख ) इति तत्र विनियोगादिति चेन्न, तत्रैव "मनुर्वैवस्वतः" (ग) इत्याद्याख्यानानां विशेषितत्वात् तेषामेव तत्र विनियोगः ॥ २३ ॥

श्रीः ॥ तथा चैकवाक्यतोपबन्धात्॥ श्रीः ३ ।४।२४॥

विद्याविधिनैकवाक्यत्वाच्च "सोऽरोदीत्"(घ इत्यादिवद्विद्यास्तुत्यर्था एताः ॥ २४ ॥ इति पारिप्लवाधिकरणम्

❀श्रीः॥ अत एव चाग्नीन्धनाद्यनपेक्षा ॥

श्रीः ३ । ४ । २५ ॥

ऊर्ध्वरेतसाम् "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" (ङ) इत्यादिश्रुतेरेव तेषां विद्यावत्त्वात्तेष्वग्न्याधानाद्यनपेक्षा विद्या ॥२५॥

श्री लक्ष्मीकान्ताय नमः

---

( क ) कौषी० ३ । १
( ख )
( ग )
( घ )
( ङ ) बृ० ६ । ४ । २२

## ❀श्रीः ॥ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥
## श्रीः ३ । ४ । २६ ॥

कर्मवत्सु गृहस्थेष्वग्निहोत्रादिसर्वकर्मविद्धयपेक्षा विद्या. "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" ( च ) इत्यादिश्रुतेः यथा चाश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षगमने ऊर्द्ध्वरेतस्सु च विद्या स्वाश्रमकर्मापेक्षा ॥ २६ ॥

इति सर्वापेक्षाधिकरणम्

## ❀श्रीः ॥ शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्याऽनुष्ठेयत्वात् ॥ श्रीः ३।४।२७॥

गृहस्थो विहितकर्मव्यापृत्तोऽपि "शान्तोदान्तः" ( छ ) इत्यादिना शमदमादिविधेस्तद्युक्तः स्यात्. विद्यानिष्पत्तये शमदमादीनामवश्यानुष्ठेयत्वात्. शान्त्युपरतिप्रभृतिभिर्विना विद्योत्पत्त्यनुपपत्तेः ॥ २७ ॥ इति शमदमाद्यधिकरणम्

## ❀श्रीः ॥ सर्वाऽन्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥
## श्रीः ३ । ४ । २८ ॥

प्राणविद्यानिष्ठस्य "न ह वा एवंविदि किञ्चनाऽनन्नं भवति" ( ज ) इति सर्वाऽन्नानुमतिर्न सर्वदा. अपि तु प्राणात्ययापत्तावेव अतिशयितशक्तेर्ब्रह्मविदोऽप्युच्छिष्टभक्षणादि प्राणात्ययापत्तावेव तद्दर्शनात् ॥२८॥

---

( च ) बृ० ६ । ४ । २२
( छ ) बृ० ६ । ४ । २३
( ज ) छा० ५ । २ । १

श्रीः ॥ अबाधाच्च ॥ श्रीः ३ । ४ । २९ ॥

"आहारशुद्धौ सत्त्वशुद्धिः" ( झ ) इत्याहारशुद्धिविधेरबाधाच्च प्राणसंशय एवेति ॥ २९ ॥

श्रीः ॥ अपि स्मर्यते ॥ ३ । ४ । ३० ॥

"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः" ( ञ ) इत्यादिना स्मर्यते च प्राणसंशय एवेति ॥ ३० ॥

श्रीः ॥ शब्दश्चातोऽकामकारे ॥ श्रीः ३ । ४ । ३१ ॥

"तस्माद्ब्राह्मणः सुरां न पिबेत्" (ट) इति कामकारे निवृत्तिशब्दश्चात एव. यतः प्राणसंशय एव सर्वान्नानुमतिः ॥ ३१ ॥

इति सर्वान्नानुमत्यधिकरणम्

❀श्री॥ विहितत्वाच्चाश्रमकर्मापि॥श्रीः ३ । ४ । ३२॥

यज्ञादि कर्म "यावज्जीवमग्निहोत्रम्" ( ठ ) इत्यादिना विहितत्वाद्विद्यारहितकेवलाश्रमिणाऽप्यनुष्ठेयम् ॥ ३२ ॥

श्रीः ॥ सहकारित्वेन च ॥ श्रीः ३ । ४ । ३३ ॥

"तमेतं वेदानुवचनेन" इत्यादिना विद्याङ्गतया विधेर्विद्यासहकारित्वेन विदुषां चानुष्ठेयम् ॥ ३३ ॥

श्री ॥ सर्वथापि त एवोभयलिङ्गात् ॥ श्रीः ३।४।३४॥

उभयत्र विनियोगेऽपि यज्ञादयस्त एव उभयत्र प्रत्यभिज्ञानाख्यालिङ्गात्. कर्मस्वरूपैक्येऽपि विनियोगपृथक्त्वेन न विरोधः ॥ ३४ ॥

---

( झ ) छा० ७ । २६ । २
( ञ )
( ट )
( ठ )

श्रीः ॥ अनभिभवञ्च दर्शयति॥श्रीः ३ । ४ । ३५॥

"धर्मेण पापमपनुदति,, ( ड ) इति विद्योत्पत्तिप्रतिबन्धकपाप-निवर्त्तनेन विद्याया अनभिभवं कर्मानुष्ठानकार्यं च दर्शयति ॥ ३५ ॥

❀श्रीः ॥ अन्तरा चापि तु तद्दृष्टेः ॥

श्रीः ३ । ४ । ३६ ॥

आश्रमान्तरा * वर्तमानो विधुरादिरनाश्रमी, तस्यापि विद्या-धिकारोऽस्ति, रैक्वादिष्वनाश्रमिषु ब्रह्मविद्यादर्शनात् ॥ ३६ ॥

श्रीः ॥ अपि स्मर्यते ॥ श्रीः ३ । ४ । ३७ ॥

अनाश्रमिणोऽपि जपादिना विद्यानुग्रहः स्मर्यते "जप्येनापि च संसिद्ध्येद्,, ( ढ ) इति ॥ ३७ ॥

श्रीः॥ विशेषानुग्रहश्च ॥ श्रीः ३ । ४ । ३८ ॥

आश्रमाऽनियतधर्मविशेषेण विद्यानुग्रहश्च श्रूयते "तपसा ब्रह्म-चर्येण श्रद्धया विद्यया चात्मानम" (ण) इत्यादिना ॥ ३८ ॥

श्रीः॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च॥श्रीः ३।४।३९ ॥

अनाश्रमित्वादाश्रमित्वं ज्यायः धर्मभूयस्त्वात् "अनाश्रमी न तिष्ठेत्तु" (त) इति स्मृतेः ॥ ३९ ॥ इति विधुराधिकरणम

---

( ड ) तै० ना० ६ । ५०

* आश्रमानन्तरेति तै० पा०

( ढ )

( ण )

( त )

❀श्रीः ॥ तद्भूतस्य तु नातद्भावोजैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ श्रीः ३ । ४ । ४० ॥

नैष्ठिकादिनिष्ठस्य प्रच्युत्य स्थितिर्न सम्भवत्येव, नियमात् तद्रूपनिवृत्तिभ्यः तथा नियच्छन्ति हि "अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्,, ( थ ) इति "अरण्यमियात् ततो न पुनरियात्,, ( द ) इति च " संन्यस्याग्निं न पुनरावर्त्तयेत्" ( ध ) इति च. अतस्तेषां प्रच्युत्य स्थित्यभावाद्विद्याऽनधिकारः । जैमिनेरप्येवम् ॥ ४० ॥

श्रीः ॥ नचाधिकारिकमपि पतनानुमानात्तदयोगात् श्रीः ॥ ३ । ४ । ४१

" अवकीर्णी पशुश्च तद्वत्,, ( न ) इत्याधिकारलक्षणोक्तं प्रायश्चित्तमपि तस्य न सम्भवति, तस्य प्रायश्चित्तानधिकारस्मृतेस्तदसम्भवात्. "आरूढो नैष्ठिकं धर्म्मम,, इत्यारभ्य "प्रायश्चित्तम्न पश्यामि" ( प ) इत्यादिस्मृतेः ॥ ४१ ॥

श्रीः ॥ उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ श्रीः ३ । ४ । ४२ ॥

उपपातकत्वात्प्रायश्चित्तमेके, मध्वशननिषेधस्तत्प्रायश्चित्तवदिति. तदुक्तम "उत्तरेषाञ्चैतदविरोधि" ( फ ) इति ॥ ४२ ॥

---

( थ )
( द )
( ध )

( न )
( प )
( फ )

श्रीः ॥ बहिस्तूभयथापि स्मृतेराचाराच्च ॥

श्रीः ३ । ४ । ४३ ॥

उपपातकत्वेऽप्यन्यथापि कर्माधिकाराच्च बहिष्कृता एव ते. तथा स्मृतेः "प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा,, ( ब ) इति शिष्टबहिष्काराच्च । ४३ ॥

❀श्रीः ॥ स्वामिनः फलश्रुतेरित्यात्रेयः ॥

श्रीः ३ । ४ । ४४ ॥

स्वामिनः यजमानस्य * उद्गीथाद्युपासनं यजमानेनानुष्ठेयम्, कुतस्तस्यैव क्रतुवीर्यवत्तरत्वादिफलश्रुतेरित्यात्रेय आचार्यो मन्यते ॥ ४४ ॥

श्रीः ॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि ॥

परिक्रियते ॥ श्रीः ३ । ४ । ४५ ॥

कर्मस्वरूपवत्तदङ्गाश्रयमप्यार्त्विज्यं साङ्गफलसाधनकर्मानुष्ठानाय हि ऋत्विक् परिक्रियते ॥ ४५ ॥ इति स्वाम्यधिकरणम्

❀श्रीः ॥ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो

विध्यादिवत् ॥ श्रीः ३ । ४ । ४६ ॥

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य,, इत्यारभ्य "अथ मुनिः"( भ ) इत्यत्र विद्यावतो यज्ञादिवत् बाल्यपाण्डित्ययोस्तृतीयं सहकार्यन्तरं

---

( ब )

* इत्यन्तमान्ध्रपुस्तके ।

( भ ) बृ० ५ । ५

मौनं विधीयते, पक्षेण प्रकृष्टमननशीले मुनिशब्दप्रयोगात. विद्याभ्यासरूपमननमिदमप्राप्तमेव ॥ ४६ ॥

श्रीः ॥ कृत्स्नभावात्तु गृहिणोपसंहारः ॥

श्रीः ३ । ४ । ४७ ॥

कृत्स्नेष्वाश्रमिषु विद्यासद्भावात् । छान्दोग्ये "अभिसमावृत्याथ कुटुम्बे" ( म ) इत्यारभ्य "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकम् (म) इति गृहिणोपसंहारः सर्वेशं प्रदर्शनार्थः तुशब्दो हि गृहिण एवेति शङ्काव्यावृत्त्यर्थः * ॥ ४७ ॥

श्रीः ॥ मौनवदितरेषामप्युपदेशात् ॥

श्रीः ३ । ४ । ४८ ॥

"अथ मुनिः,, इत्यत्रापि "अथ भिक्षाचर्यं चरन्ति,, (य) इति-पारिव्राज्येनोपसंहारः प्रदर्शनार्थः मौनभिक्षाचर्यादिवदितराश्रम-धर्माणां यज्ञादीनामप्युपदेशात् ॥ ४८ ॥

इति सहकार्यन्तरविध्यधिकरणम

❀श्रीः ॥ अनाविष्कुर्वन्नन्वयात् ॥ श्रीः ३ । ४ । ४९ ॥

"पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" ( य ) इति बाल्यमित्यविशेषेण श्रुतावपि बालस्य कर्म, स्वमाहात्म्यानाविष्करणरूप-विद्यान्वययोग्यतया विधीयते ॥ ४९ ॥

---

( म ) छा० ८ । १८ । १

* इत्येतदधिकं तै० पुस्तके ।

( य ) बृ० ५ । ५

* श्रीः ॥ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥

श्रीः ३ । ४ । ५० ॥

अभ्युदयफलमुपासनं स्वसाधनभूतपुण्यकर्मानन्तरमुत्पद्यत इति नायं नियमः प्रबलकर्मान्तरप्रतिबन्धाभावे तदनन्तरं प्रतिबन्धे तु तस्मिन्समाप्ते तदेव वीर्यवत्तरमिति प्रतिबन्धाभावे फलदर्शनात् ॥ ५० ॥ इत्यैहिकाधिकरणम्

❋श्रीः ॥ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ श्रीः ३ । ४ । ५१ ॥

एवं मुक्तिफलोपासनस्यापि प्रतिबन्धाभावाभावयोरित्यनियमः प्रतिबन्धाभाव एवेति फलोदयावस्थाऽवधृतेः ॥ ५१ ॥

इति मुक्तिफलाधिकरणम्



इति श्रीमद्भगवद्रामानुजाचार्यविरचिते
श्रीमति वेदान्तसारे तृतीयाध्यायस्य,
चतुर्थः पादः ॥ ४ ॥

—*—

पादेऽस्मिन् सूत्राण्येकपञ्चाशत् ॥ ५१ ॥
अधिकरणानि पञ्चदश ॥ १५ ॥

———*———

समाप्तश्चायम् ब्रह्मविद्याचिन्तनपरः
साधनाध्यायस्तृतीयः ॥ ३ ॥
हरिः ॐ तत्सत्



श्रीमते रामानुजाय नमः

श्रीसीतादेवीसमेताय श्रीरामचन्द्राय नमः

श्रीमद्भगवद्रामानुजाचार्यविरचिते,

# वेदान्तसारे,

॥ चतुर्थाध्यायारम्भः ॥

## श्रीः ॥ आवृत्तिरसकृदुपदेशात् ॥ श्रीः ४ । १ । १ ॥

"ब्रह्मविदाप्नोति परम्" इत्यादिषु मोक्षसाधनं वेदनमसकृदावृत्तम् "विद्यावुपासीत" इति विद्युपास्त्योरुपक्रमोपसंहारयोर्व्यतिरेकेणोपदेशात् ॥ १ ॥

## श्रीः ॥ लिङ्गाच्च ॥ श्रीः ४ । १ । २ ॥

लिङ्गं स्मृतिः "मान्ध्यायन्त उपासते । तेषामहं समुद्धर्ता" (अ) "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा । तद्ध्यानम्" (ब) इत्यादिस्मृतेश्च ॥ २ ॥ इत्यावृत्त्यधिकरणम्

## श्रीः ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ श्रीः ४ । १ । ३ ॥

यद्यपि "अधिकं तु भेदनिर्देशात्" २ । १ । २२ "अधिकोपदेशात्" ३ । ४ । ८ । इत्यादिषु प्रत्यगात्मनोऽर्थान्तरत्वं ब्रह्मणः

(अ) गी० १२ । २ / (ब) वि० पु० ६ । ७ । ५१

प्रतिपादितं तथाऽप्युपासिता "अहं ब्रह्मास्मि" ( र ) इत्येवोपासीत यतः पूर्वे उपासितारः "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" (ल) इत्यात्मत्वेनावगच्छन्ति * उपासितुरर्थान्तरमपि ब्रह्म, तानुपासितॄन् स्वात्मभूतं ग्राहयन्ति शास्त्राणि "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मा" (व) इत्यादीनि यथा मनुष्योऽहमिति मनुष्यशरीरस्य स्वात्मप्रकारतैकस्वभावतया प्रकारिणि स्वात्मन्यहंशब्दस्य तद्बुद्धेश्च पर्यवसानम् ; तथा स्वात्मनोऽपि परमात्मशरीरतया तत्प्रकारस्वभावत्वेनाऽहंशब्दतद्बुद्ध्योः परमात्मनि पर्यवसानमिति "अहं ब्रह्म" इत्येवोपासीत ॥३॥ इत्यात्मत्वोपासनाधिकरणम्

## ❋श्रीः ॥ न प्रतीकेन हि सः ॥ श्रीः ४ । १ । ४ ॥

"मनो ब्रह्म" ( श ) इत्यादि प्रतीके तु नात्मेति ग्रहणम् न हि तत्र परमात्मोपास्यः परमात्मदृष्ट्या हि मनःप्रभृतीति ॥ ४ ॥

## श्रीः ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ श्रीः ४ । १ । ५ ॥

ब्रह्मण उत्कर्षात् तद्दृष्ट्या मनआद्युपासनं हि अभ्युदयाय भवतीति ॥ ५ ॥ इति प्रतीकाधिकरणम्

---

( र ) बृ० ३ । ४ । १०

( ल )

* इत्यात्मेत्येवोपगच्छन्तीति तै० पा०

( व ) माध्यन्दिनशाखायाम्

( श ) छा० ३ । ८ । १

❀श्रीः ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥
श्रीः ४ । १ । ६ ॥

"य एवासौ तपति तमुद्गीथमुपासीत,, ( व ) इत्यादेरेवोत्कृष्टत्वात् उद्गीथादौ तदृष्टय एव कार्याः ॥ ६ ॥

इत्यादित्यादिमत्यधिकरणम्

❀श्रीः ॥ आसीनः सम्भवात् ॥ श्रीः ४ । १ । ७ ॥

आसीन एवोपासनं कुर्यात् तस्यैवैकाग्र्यसम्भवात् ॥ ७ ॥

श्रीः ॥ ध्यानाच्च ॥ श्रीः ४ । १ । ८ ॥

"निदिध्यासितव्यः" ( स ) इत्युपासनस्य ध्यानरूपत्वाच्चासीनः ॥ ८ ॥

श्रीः ॥ अचलत्वं चापेक्ष्य ॥ श्रीः ४ । १ । ९ ॥

पृथिव्यादेरचलत्वमपेक्ष्य "ध्यायतीव पृथिवी" (ह) इत्यादिप्रयोगात् मनसो निश्चलत्वमासीनस्यैव ॥ ९ ॥

श्रीः ॥ स्मरन्ति च ॥ श्रीः ४ । १ । १० ॥

उपविश्यासने युञ्ज्याद् " (क्ष) इत्यादिना ॥ १० ॥

श्रीः॥ यत्रैकाग्रता तत्राविशेषात् ॥ श्रीः ४।१।११ ॥

यत्र देशे यत्र काले मनस एकाग्रता तत्रोपासीत देशकालाविशेषाश्रवणात् ॥ ११ ॥

---

( व ) छा० १ । २ । १
( स ) बृ० ६ । ५ । ५
[ ह ] छा० । ७ । ६ । १
[ क्ष ] गी० ६ । १२

❀श्रीः ॥ आप्रयाणात्तत्रापि हि दृष्टम् ॥ श्रीः ४ । १ । १२ ॥

आप्रयाणादहरहरुपासनं कार्यम् "स खल्वेवं वर्तयन् यावदायुषम्" (त्र) इत्यादिदर्शनाच्च ॥ १२ ॥ श्रीकेशवाय नमः

इत्याप्रयाणाधिकरणम्

❀श्रीः ॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ श्रीः ४ । १ । १३ ॥

उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वकृताघविनाशः उत्तरकृताघास्लेषश्च भवति "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (ज्ञ) "एवमेवंविदि पापं कर्म न श्लिष्यते" (ॐ) इति श्रुतेः ॥ १३ ॥

इति तदधिगमाधिकरणम्

❀श्रीः ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥ श्रीः ४ । १ । १४ ॥

पाते तु* विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलहेतुत्वादेवमश्लेषविनाशौ वृष्टयन्नायुरारोग्यादिविद्याऽनुगुणफलस्य कर्मणः शरीरपातादूर्ध्वमफलत्वम् ॥ १४ ॥ श्रियै नमः

इतीतराधिकरणम्

---

[ त्र ] छा० ८ । १५ । १

[ ज्ञ ] छा० ५ । २४ । ३

[ ॐ ] छा० ४ । १४ । ३

[ * ] पातेत्विस्यधिकं [ क ] पुस्तके ।

❀श्रीः ॥ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥

श्रीः ४ । १ । १५ ॥

विद्याधिगतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः "तस्य तावदेव चिरम्" इति शरीरपातावधिश्रुतेः ॥ १५ ॥

इत्यनारब्धकार्याधिकरणम्

❀श्रीः ॥ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥

श्रीः ४ । १ । १६ ॥

अग्निहोत्राद्याश्रमकर्मविद्योत्पत्त्याख्यकार्यायैव आप्रयाणादनुष्ठेयम् "तमेतं वेदानुवचनेन" इत्यादिना विद्योत्पत्तिकार्यत्वमाश्रमधर्मस्य दृष्टम् ॥ १६ ॥

श्रीः॥ अतोऽन्यापि ह्येकेषामुभयोः॥श्रीः ४।१।१७॥

"तस्य पुत्रा दायमुपयन्ति" (क) "सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" (ख) इति वचनस्याग्निहोत्रादेरन्याप्यनादिकालप्रवृत्ता साधुकृत्या प्रबलकर्मप्रतिबद्धफला, उत्तरान्यापि*विद्यानुगुणफला प्रतिबद्धफला चेति पूर्वोत्तरकृत्ययोरुभयोरपि अस्त्येव विषयः ॥ १७ ॥

श्रीः॥ यदेव विद्ययेति हि ॥ श्रीः ४ । १ । १८॥

"यदेव विद्यया" इत्यत्र फलप्रतिबन्धोऽस्तीत्युक्तम् ॥ १८ ॥

---

[ क ]

[ ख ]

*उत्तराप्युपयन्नादिविद्यानुगुणफलाप्रतिबद्धाचेति इति तै० पा०

❀श्रीः ॥ भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥

श्रीः ४ । १ । १६ ॥

आरब्धकार्ययोः पुण्यपापयोर्यत् फलं तदेकशरीरावसानमनेकशरीरावसानं वा भुक्त्वैव तदनन्तरं ब्रह्म प्राप्नोति ॥ १६ ॥

इतीतरक्षपणाधिकरणम्

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

—०-*—⁂—*-०—

पादेऽस्मिन् सूत्राण्येकोनविंशतिः ॥ १६ ॥
अधिकरणानि चैकादश ॥ ११ ॥
हरिः ओ३म् तत्सत्

——:*:——

प्रतिष्ठा तर्काणां प्रतिपदमृचां धाम यजुषाम् ॥
परिष्कारः साम्नां परिपणमथर्वाङ्गिरसयोः
प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापसगिराम् ।
प्रसक्तिं संवित्तेः प्रदिशतु यतीशानभणितिः ॥

श्रीमते रामानुजाय नमः ॥

श्रीत्रिविक्रमाय भगवते भूयो नमः

—:—०—:—

चतुर्थाध्याये द्वितीयपादारम्भः ॥

—:—०—०—:—

## ❀श्रीः ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ श्रीः ४।२।१॥

"अस्य सोम्य ! पुरुषस्य प्रयतो वाङ् मनसि सम्पद्यते" (ग) इति शब्दादुत्क्रान्तौ मनसः प्रागेव वाच उपरति दर्शनाच्च वाङ्मनसि संम्पद्यते संयुज्यत इति ॥ १ ॥

## श्रीः ॥ अत एव सर्वाण्यनु ॥ श्रीः ४ । २ । २ ॥

अतः " सर्वेन्द्रियैर्मनसि सम्पद्यमानैः" [घ] इति शब्दादुपरतिदर्शनाच्च वाचमनुसर्वाणीन्द्रियाणि मनसि संयुज्यन्ते ॥ २ ॥

इति वागधिकरणम

## *श्रीः ॥ तन्मनः प्राण उत्तरात् ॥ श्रीः ४ । २ । ३ ॥

"मनः प्राणे" (ग) इति शब्दात्सर्वेन्द्रिययुक्तं मनः, प्राणे संयुज्यते ॥ ३ ॥

इति मनोऽधिकरणम्

## *श्रीः ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ श्रीः ४ । २ । ४ ॥

सः प्राणोऽनन्तरं जीवे संयुज्यते " एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" (ङ) इति प्राणस्य जीवोपगमादिश्रुतेः ॥ ४ ॥

इत्यध्यक्षाधिकरणम्

---

[ ग ] छा० ६ । ८ । ६
[ घ ]

[ ङ ] बृ० ६ । ३ । ३८

*श्रीः ॥ भूतेषु तच्छ्रुतेः ॥ श्रीः ४ । २ । ५ ॥

"प्राणस्तेजसि" (च) इति भूतान्तरसंसृष्टं तेजो विधीयते इति प्राणा भूतेषु संयुज्यन्ते. * एतदविरोधाय जीवे संयुज्य पश्चात्तेजः संयोगं प्राणस्तेजसीति वदति ॥ ५ ॥

श्रीः॥ नैकस्मिन् दर्शयतो हि ॥ श्रीः ४ । २ । ६ ॥

" तेजसि " (च) इति न तेजोमात्रे, त्रिवृत्करणश्रुतिस्मृतिभ्यां केवलस्य तेजसोऽनवस्थानात् ॥ ६ ॥ इतिभूताधिकरणम्

*श्रीः ॥ समानाचासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥

श्रीः ४ । २ । ७ ॥

अर्चिरादिगत्युपक्रमात्प्रागुक्ता उत्क्रान्तिर्विद्वदविदुषोः समाना. विदुषोऽर्चिरादिगत्या ब्रह्मप्राप्तिश्रुतेः "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (छ) इत्य-त्रैवामृतत्वब्रह्मप्राप्तिवचनं शरीरेन्द्रियादिसम्बन्धमदग्ध्वैवोपासना-ऽऽरम्भाभिप्रायमित्यभ्युपगन्तव्यमित्यर्थः ॥ ७ ॥

श्रीः ॥ तदापीतेः संसारव्यपदेशात् ॥श्रीः॥४॥२॥८॥

अर्चिरादिगमनेन ब्रह्मप्राप्तेः प्राक् शरीरसम्बन्धव्यपदेशात् तदमृतत्वादिवचनमुक्तप्रकारमेव ॥ ८ ॥

---

[ च ] छा० ६ । ८ । ६

[ * ] इतः परमेतदविरोधायेत्यादिपाठो नान्यपुस्तके

[ छ ] कठोप० २ । ६ । १४

श्रीः॥ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥श्रीः४।२।९॥

शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते अन्यथा गत्यनुपपत्तेः न केवलं गत्यनुपपत्तिमात्रं सूक्ष्मशरीरत्वे प्रमाणम्, चन्द्रमसा *संवादित्वं प्रमाणान्तरतश्च सूक्ष्मशरीरत्वोपलब्धेः "तं प्रतिब्रूयात्सत्यं ब्रूयात्" [ज] इति ॥ ९ ॥

श्रीः ॥ नोपमर्देनातः ॥ श्रीः ४ । २ । १० ॥

अत उक्ताद्धेतोः "अथ मर्त्योऽमृतो भवति,, (झ) इत्यमृतत्ववचनं न देहसम्बन्धोपमर्देन ॥ १० ॥

श्रीः॥ अस्यैव चोपपत्तेरूष्मा ॥ श्रीः ४ । २ । ११ ॥

अस्य सूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेश्च न तदुपमर्देन उपलभ्यते ह्युत्क्रमतो विदुषः सूक्ष्मदेहगुण ऊष्मा अन्यत्रानुपलम्भात् न स्थूलगुणः ॥ ११ ॥

श्रीः॥ प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकषाम् ॥

श्रीः ४ । २ । १२ ॥

"अथाकामयमानो न तस्य प्राणा उत्क्रामन्ति"(ञ) इति विदुष-उत्क्रान्तिनिषेधादत्रैवसाक्षाद्ब्रह्मप्राप्तिरिति चेन्नैतत्, विदुष उत्क्रममाणस्याऽर्चिरादिकया गमनाय प्राणा न विश्लिष्यन्ते इति ह्युच्यते "न तस्य प्राणाः उत्क्रामन्ति,, [ञ] इत्ययमर्थो माध्यन्दिनानां

---

* संवादिप्रमाणेत्यादि०तै०पा० | ( झ ) कठोप० २ । ६ । १४
( ज ) | ( ञ ) बृ० ६ । ४ । ६

पाठे स्पष्टो विधीयते "यो कामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राणा उत्क्रामन्ति" ( ट ) इति ॥ १२ ॥

**श्रीः ॥ स्मर्यते च ॥ श्रीः ४ । २ । १३ ॥**

विदुषोऽपि मूर्द्धन्यनाड्यागमनं स्मर्यते च "ऊर्द्ध्वमेकस्थित स्तेषां यो भित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् " (ठ) इति ॥ १३ ॥

**❀श्री॥ तानि परे तथा ह्याह॥ श्रीः ४ । २ । १४ ॥**

"तेजः परस्यां देवतायाम्" (ड) इति श्रुतेः परदेवतासम्पत्तिरुत्क्रममाणस्य विश्रामस्थानभूमिः * तानि भूतानि जीवसंयुक्तानि परदेवतायां सम्पद्यन्ते ॥ १४ ॥ इति परसम्पत्त्यधिकरणम् ।

**❀श्रीः ॥ अविभागो वचनात् ॥श्रीः ४ । २ १५ ॥**

परदेवतासम्पत्तिवचनमविभागमात्रपरम् "वाङ् मनसि सम्पद्यते" (ड) इति सम्पत्तिपदस्यैवात्रानुसक्तस्यार्थान्तरत्वे प्रमाणाभावात् मनःप्रभृतिषु हि प्रलयासम्भवादविभागमात्रपरम् ॥ १५ ॥

इत्यविभागाधिकरणम्

**❀श्रीः॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ श्रीः ४ । २ । १६ ॥**

हार्दपरमपुरुषाराधनरूपविद्यासामर्थ्यात्तदङ्गगतिचिन्तनेन च, प्रीतपरमपुरुषाऽनुगृहीतस्तदनुग्रहतः प्रकाशिततद्वारो जीवः शता-

---

( ट ) माध्यन्दिनपाठे
( ठ )

( ड ) छा० ६ । ८ । ६
* विश्रमस्थानमिती ति तै०

धिकया मूर्द्धन्यनाड्या गच्छति. तदनुग्रहादेव जीवस्थानमग्रे प्रकाशवद्भवति. हार्दः परमात्मा परमपुरुषः "तस्याः शिखाया-मध्ये परमात्मा व्यवस्थितः" (ढ) "सर्वस्य चाहं हृदि सन्निविष्टः" (ण) इति श्रुतिस्मृतिभ्याम् ॥ १६ ॥ इति तदोकोऽधिकरणम्

❀श्रीः ॥ रश्म्यनुसारी ॥ श्रीः ४ । २ । १७ ॥

"अथैतैरेव रश्मिभिरूर्द्ध्वमाक्रमते" (त) इति श्रुतेः विद्वान् रश्म्यनुसार्येव गच्छति. निश्यपि रश्मयः सन्त्येव. * निदाघादा-वूष्मोपलब्धेः हेमन्तेऽनुपलब्धिस्तु हिमाभिभवात् ॥ १७ ॥

इति रश्म्यनुसाराधिकरणम्

❀श्रीः ॥ निशि नेतिचेन्न सम्बन्धस्य यावद्देह-भावित्वाद्दर्शयति च ॥ श्रीः ४ । २ । १८ ॥

"दिवा च शुक्लपक्षश्च" इत्यारभ्य "विपरीतं तु गर्हितम्" (थ) इति निशामरणनिन्दनात्, निशि मृतस्य न ब्रह्मप्राप्तिरिति चेन्न, कर्मसम्बन्धस्य यावद्देहभावित्वात्, प्रारब्धस्य यावच्चरमदेहावसा-नभावित्वाच्च, ब्रह्मप्राप्तिविघ्नहेत्वभावात्, दर्शयति च "तस्य ताव-देव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति निशानिन्दा, इतरपुरुषार्थविषया ॥ १८ ॥ इति निशाधिकरणम्

❀श्रीः ॥ अतश्चायनेऽपि दक्षिणे ॥ श्रीः ४ । २ । १९ ॥

( अतो बन्धहेत्वभावादेव ) * दक्षिणायने मृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव ॥ १९ ॥

---

( ढ ) तै० ना० ६ । ११
( ण ) गी० १५ । १५
( त ) छा० ८ । ६ । ५

* सम्भवन्त्येवेति तै० पा०
( थ )
* इत्यधिकमान्ध्रपुस्तके

श्रीः ॥ योगिनः प्रति स्मर्यते स्मार्ते चैते ॥

श्रीः ४ । २ । २० ॥

"यत्रकाले त्वनावृत्तिमावृत्तिं चैव योगिनः" (द) इति न मरणकालः स्मर्यते, अपि तु योगिनोविद्यानिष्ठान्प्रत्यर्चिरादिका तद्विपरीता चेत्येते गती स्मार्ते स्मृतिविषयभूते स्मर्यते "नैते सृती पार्थ! जानन्योगी मुह्यति कश्चन " (ध) इति वचनात् ॥ २० ॥

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते
श्रीमति वेदान्तसारे चतुर्थाध्यायस्य,
द्वितीयः पादः ॥ २ ॥

—*—

पादेऽस्मिन् सूत्राणि विंशतिः ॥ २० ॥
अधिकरणानि चैकादश ॥ ११ ॥
हरिः ॐ तत्सत्

---

( द ) गी० ८ । २३
( ध ) गी० ८ । २७

श्रीमते रामानुजाय नमः ॥

श्रीयदुगिरीशपरब्रह्मणे नमो नमः ॥



चतुर्थाध्याये तृतीयपादारम्भः ॥

श्रीः॥ अर्चिरादिना तत्प्रथितेः ॥ श्री ४ । ३ । १ ॥

अर्चिरादिनैकेन विद्वान् गच्छति, सर्वासु श्रुतिषु तस्मिन्नेतस्यप्रत्यभिज्ञानात् ॥ १ ॥ इत्यर्चिराद्यधिकरणम्

❀श्रीः ॥ वायुमब्दादविशेषविशेषाभ्याम् ॥

श्रीः ४ । ३ । २ ॥

"मासेभ्यः सँव्वत्सरं सँव्वत्सरादादित्यम्' (न) इत्यब्दादित्ययोर्मध्ये द्वयोः प्रकरणान्तरयोरेकत्र देवलोकश्रुतिरितरत्र वायुशब्दः, तत्र देवलोकशब्दोऽपि देवानां लोक इति वायोरविशेषेण वाचकः, वायुशब्दश्च तस्यैव विशेषणवाचक इत्यविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात्पूर्वं वायुमेकमेवेति निवेशयेत् ॥ २ ॥ इति वाय्वधिकरणम्

❀श्रीः॥तडितोऽधिवरुणः सम्बन्धात्॥श्री ४ ।३। ३॥

तडितोऽनन्तरं वरुणो निवेश्यः मेघोदकवर्तित्वात् * विद्युतोमेघस्थजलात्मकत्वने लोकवेदयोर्वरुणस्य विद्युत्सम्बन्धावगमात्, तदनन्तरमिन्द्रप्रजापतिपाठक्रमात्, प्रबलविशेषाभावाच्च ॥ ३ ॥

---

( न ) छा० ४ । १५

* मेघोदरवृत्तित्वादिति तै० पा०

इति वरुणाधिकरणम्

❀श्रीः॥आतिवाहिकास्तल्लिङ्गात्॥ श्रीः ४ । ३ । ४॥

(अर्चिरादयः)(*) अर्चिराद्यभिमानिदेवताविशेषाः, विदुषामातिवाहिकत्वेन परमपुरुषनियुक्ता इति विज्ञायते "स एतान् ब्रह्म गमयति,, ( प ) इति तेष्वेकत्र गमयितृत्वदर्शनाल्लिङ्गात् ॥ ४ ॥

श्रीः ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ श्रीः ४ । ३ । ५ ॥

"चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति" ( फ ) इतिश्रुतेः वैद्युतपुरुषात्परतः स एव ब्रह्म गमयिता. वरुणेन्द्रप्रजापतीनां तदनुग्राहकत्वमेव ॥ ५ ॥

इत्यादिवाहिकाधिकरणम्

❀श्रीः॥कार्यं बादरिरस्य गत्युपपत्तेः॥

श्रीः ४ । ३ । ६ ॥

कार्यं हिरण्यगर्भमुपासीनमर्चिरादिर्नयति. अस्यैव गत्युपपत्तेः नहि सर्वगतं परं ब्रह्मोपासीनानां गतिरस्तीतिबादरिर्मेने ॥ ६ ॥

श्रीः ॥ विशेषितत्वाच्च ॥ श्रीः ४ । ३ । ७ ॥

"तत्पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति" ( ब )"प्रजापतेः सभां वेश्म प्रपद्ये" ( भ ) इति च विशेषितत्वात् हिरण्यगर्भमेव ॥ ७ ॥

---

( * ) इत्यधिकं(क)पुस्तके
( प ) छा० ४ । १५
( फ ) छा० ५ । १० । २
( ब ) बृ० ८ । २ । १५
( भ ) छा० ८ । १४

श्रीः॥ सामीप्यात्तु तद्व्यपदेशः ॥ श्रीः ४ । ३ । ८ ॥

( "ब्रह्म गमयति" इति ब्रह्मव्यपदेशः ) * तत्सामीप्यादस्य "यो ब्रह्माणं विदधाति पूर्वम्" ( म ) इति सामीप्यमस्ति हि ॥ ८ ॥

श्रीः ॥ कार्यात्यये तदध्यक्षेण सहातः परमविधानात् ॥ श्रीः ४ । ३ । ९ ॥

हिरण्यगर्भप्राप्तावप्यपुनरावृत्तिश्रुत्यविरोधः हिरण्यगर्भलोकात्यये तदध्यक्षेण सहातः परं गच्छति "ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" ( य ) इति श्रुतेः ॥ ९ ॥

श्रीः ॥ स्मृतेश्च ॥ श्रीः ४ । ३ । १० ॥

"ब्रह्मणा सह ते सर्वे" इत्यारभ्य "प्रविशन्ति परं पदम्" ( र ) इति स्मृतेश्च ॥ १० ॥

श्रीः॥ परं जैमिनिर्मुख्यत्वात् ॥ श्रीः ४।३।११ ॥

परमुपासीनान्नयतीति जैमिनिः ("ब्रह्म गमयति" इति) *तत्रैव ब्रह्मशब्दस्य मुख्यत्वात् ॥ ११ ॥

श्रीः ॥ दर्शनाच्च ॥ श्रीः ४ । ३ । १२ ॥

"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य" ( ल ) इति श्रुतेश्च ॥ १२ ॥

---

* इत्यधिकं तै० पुस्तके

( म ) श्वे० ६ । ३५

( य )

( र )

* इत्यधिकमान्ध्रपुस्तकेपठ्यते

श्रीः ॥ नच कार्ये प्रत्यभिसन्धिः॥ श्रीः ४ ।३।१३॥

"प्रजापतेः सभाम्,, इति प्रत्यभिसन्धिश्च न कार्ये प्रजापतिशब्दस्य "पतिं विश्वस्यात्मेश्वरम्" ( व ) इत्यादि श्रुतेः परस्मिन् ब्रह्मण्येव मुख्यत्वात् ब्रह्मलोकशब्दश्च कर्मधारयवृत्त्या तत्रैवेत्यभिप्रायः "ते ब्रह्मलोके,, इति श्रुतिः ब्रह्मैव लोक इति परब्रह्मविषयैव" ब्रह्मणा सह ते सर्वे "इति स्मृतिश्च "तदुपर्यपि" १ । ३ । २५ इति न्यायेन चतुर्मुखलोकस्थोपासीनविषया ॥ १३ ॥

श्रीः॥ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा

च दोषात्तत्क्रतुश्च ॥ श्रीः ४ । ३ । १४ ॥

अप्रतीकालम्बना हि नामादिप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपपर्यन्तं सर्वं चिदचिद्वस्तुजातं ब्रह्मदृष्ट्या स्वरूपेण वा उपासते तेऽप्रतीकालम्बनास्तद्व्यतिरिक्ताः ये पञ्चाग्निविदः * (आत्मस्वरूपं ब्रह्मात्मकमुपासते, ये च परं ब्रह्मोपासते तान्नयत्यर्चिरादिरिति भगवान् बादरायणो मन्यते. कार्यमिति "पत्ते परमेवेति च पक्षे सकलोपनिषद्विरोधरूपदोषः प्रसज्यते कार्यपक्षे "ब्रह्म गमयति" "परं ज्योतिरुपसम्पद्य,, इत्याद्याः प्रकुप्येयुः परमेवेति

---

( व ) तै० ना० ६ । ११

( * ) आत्मस्वरूपं ब्रह्मात्मकमुपासत इति पाठो नान्ध्रपुस्तके

च पक्षे *"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषम-भिसम्भवन्ति" (श) इति श्रुतिः प्रकुप्येत । कार्यपक्षे तत्-क्रतुन्यायश्च विरुध्येत. अर्चिरादिना गतानां हि ब्रह्मप्राप्तिरपुनरावृत्तिश्च श्रूयते पञ्चाग्निविदस्तु*मुक्तात्मस्वरूपम "य आत्मनि तिष्ठन्" इत्यादिनाऽवगतब्रह्मात्मकत्वमुपासते इति ह्यप्रतीकालम्बनत्वम, तत्क्रतुन्यायाऽविरोधश्च उभयेऽपि हि परिपूर्णं ब्रह्मोपासते मुख-भेदेन. स्वात्मशरीरकं ब्रह्म केचन ब्रह्मात्मकं स्वात्मानमितरे इति ॥ १४ ॥ [ श्रीजगदीशपरब्रह्मणे नमः ]

श्रीः ॥ विशेषं च दर्शयति ॥ श्रीः ४ । ३ । १५ ॥

कार्यमुपासीनानां ब्रह्मप्राप्तिव्यतिरिक्तपरिमितदेशकालफल-विशेषञ्च दर्शयति श्रुतिः "यावन्नाम्नो गतम"(ष)इत्यादिका ॥१५॥

इति कार्याधिकरणम

—:—*०*०*—:—

इतिश्रीमद्भगवद्रामानुजाचार्यविरचिते
श्रीमति वेदान्तसारे चतुर्थाऽध्यायस्य
तृतीयः पादः ॥ ३ ॥

—:—०—०—:—

पादेऽस्मिन् सूत्राणि पञ्चदश ॥ १५ ॥
अधिकरणानि च पञ्च ॥ ५ ॥

———*———

* य एवमेतद्विदुरित्यादि तै० पुस्तकपाठः

[ श ] बृ० ८ । २ । १५

* प्रकृतिवियुक्तात्मस्वरूपमिति तै० पु० पा०

[ ष ] छा० ७ । १ । ५

श्रीमते रामानुजाय नमः

श्रीभूनीलादेवीसमेताय श्रीवैकुण्ठनाथाय नमः

चतुर्थाध्याये तुर्यपादारम्भः

## ❀श्रीः ॥ सम्पद्याविर्भावः स्वेन शब्दात् ॥

## श्रीः ४ । ४ । १ ॥

"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" (स) इति सिद्धस्य*सर्वप्रत्यगात्मस्वरूपस्यानादिकर्मणा तिरोहितस्य परञ्ज्योतिरुपसम्पद्याविर्भाव उच्यते स्वेन रूपेणेति विशेषेण विधानात् ॥ १ ॥

## श्रीः ॥ मुक्तः प्रतिज्ञानात् ॥ श्रीः ४ । ४ । २ ॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि कर्मबन्धविनिर्मुक्तापरिच्छिन्नज्ञानादिस्वरूपस्य ह्यत्राविर्भाव उच्यते "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" (ह) इति जागरिताद्यवस्थातिरोधानविनिर्मुक्तस्यैव वक्तव्यतया प्रतिज्ञानात् ॥ २ ॥

## श्रीः ॥ आत्मा प्रकरणात् ॥ श्रीः ४ । ४ । ३ ॥

"भूयोऽनु व्याख्यास्यामि" (ह) इति प्रकृतापहतपाप्मत्वादिगुणक आत्मेति प्रकरणादवगम्यते "य आत्माऽपहतपाप्मा विजरः"

---

[ स ] छा० ८ । १२ । २

* सिद्धस्यैव प्रत्यगात्मेत्यादि तै० पा०

[ ह ] छा० ८ । ९ । ३

इत्यारभ्य " सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः" (छ) इति हि प्रकृत्य " एतं त्वेव ते भूयोऽनुव्याख्यास्यामि " इत्युक्तम् ॥ ३ ॥

इति सम्पद्याविर्भावाधिकरणम्

## ❀श्रीः ॥ अविभागेन दृष्टत्वात् ॥ श्रीः ४ । ४ । ४॥

आविर्भूतस्वरूपो यो मुक्तात्मा स्वात्मशरीरं परं ब्रह्म स्वात्मनोऽन्यात्मतयाऽहंब्रह्मास्मीत्यविभागेनैवानुभवति "आत्मेति तूपगच्छन्ति ग्राहयन्ति च ४ । १ । ३ इति तथारूपोपासनेन तथाविधस्वरूपस्य दृष्टत्वात् "य आत्मनि तिष्ठन्...यस्यात्मा शरीरं स त आत्मा" (त्र) "तत्त्वमसि" इत्यादिशास्त्रसिद्धमेव ह्युपासितम् ॥ ४ ॥

इत्यविभागेनदृष्टत्वाधिकरणम्

## ❀श्रीः ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ श्रीः ४ । ४ । ५ ॥

अस्य स्वरूपस्याविर्भावो ब्राह्मेणापहतपाप्मत्वादिगुणकस्वरूपेण तेऽपि ब्रह्मगुणाः प्रत्यगात्मनोऽपि स्वाभाविका गुणा इति "य आत्मापहतपाप्मा" इत्यारभ्य, उपन्यासादिभ्यः, अवगम्यते त एव, "यक्षन् क्रीडन् रममाणः" इत्यादिनोच्यन्ते इति जैमिनेर्मतम् ॥ ५ ॥

## श्रीः॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ श्रीः ४ । ४ । ६ ॥

"विज्ञानघन एव" [३] इत्यवधारणात् विज्ञानमात्रस्वरूप इत्यौडुलोमिः ॥ ६ ॥

---

[ छ ] छा० ८ । ७ । १

[ त्र ] माध्यन्दिनशाखायाम्

[ ३ ]

श्रीः॥ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः॥

श्रीः ४ । ४ । ७ ॥

"विज्ञानघन एव" इति स्वप्रकाशस्वरूप इत्यवगमेऽपि "य आत्माऽपहतपाप्मा" इत्युपन्यासादिना पूर्वेषामपहतपाप्मत्वादीनामपि सद्भावावगमादुभयश्रुत्यवगतोभयस्वरूपस्य परस्परविरोधाभावात् रूपद्वयं नान्योऽन्यपरिहार्यमित्युभयरूपसमुच्चयं भगवान् बादरायणो मेने ॥ ७ ॥ इति ब्राह्माधिकरणम्

❋श्रीः॥ सङ्कल्पादेव तच्छ्रुतेः ॥ श्रीः ४ । ४ । ८ ॥

"स यदि पितृलोककामः,, ( ञ ) इत्यादिनावगताः पित्रादयः * "सङ्कल्पादेवास्य" ( ञ ) इति श्रुतेः सङ्कल्पादेव भवन्ति, यथा परमपुरुषस्य लीलाप्रवृत्तस्य दशरथवसुदेवादयः सङ्कल्पादेव भवन्ति; एवमेव परमपुरुषलीलान्तर्गतस्य मुक्तस्यापि तदुपकरणभूताः पित्रादयः सङ्कल्पादेव भवन्तीत्यर्थः ॥ ८ ॥

श्रीः॥ अत एव चानन्याधिपतिः॥ श्रीः ४ । ४ । ९ ॥

अत एव "अपहतपाप्मा... सत्यसङ्कल्पः" इत्यादिश्रुतेर्न कदाचिदपि कर्माधीनोऽयम् ॥ ९ ॥ इति सङ्कल्पाधिकरणम्

❋श्रीः॥ अभावं बादरिराह ह्येवम्॥ श्रीः ४।४।१० ॥

तस्य देहेन्द्रियाद्युपकरणाभावं बादरिर्मेने "न ह वै सशरीरस्य ,, ( ॐ ) इत्यादिश्रुतिस्तदभावमाह ॥ १० ॥

---

[ ञ ] छा० ८ । २ । १

* अवगतज्ञात्यादय इति [ ख ] पुस्तके

[ ॐ ] छा० ८ । १२ । १

श्रीः ॥ भावं जैमिनिर्विकल्पामननात् ॥

श्रीः ४ । ४ । ११ ॥

शरीरादिभावं जैमिनिर्मेने * "एकधा भवति,, ( क ) इत्यादिना देहेन्द्रियादिभिर्विविधताश्रुतेः ॥ ११ ॥

श्रीः ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥

श्रीः ४ । ४ । १२ ॥

उभयश्रुतेः सशरीरत्वमशरीरत्वं चेच्छातः यथा द्वादशाहे उभयश्रुतेः सत्रमहीनं च भवति ॥ १२ ॥

श्रीः॥ तन्वभावे सन्ध्यवदुपपत्तेः॥ श्रीः ४ ।४। १३॥

स्वेनैव सृष्टतन्वाद्यभावे, स्वप्ने "अथ रथान् रथयोगान् पथः सृजते" इति परमपुरुषसृष्टभोगवन्मुक्तोऽपि परमपुरुषसृष्टैरेव लीलारसं भुङ्क्ते ॥ १३ ॥

श्रीः ॥ भावे जाग्रद्वत् ॥ श्रीः ४ । ४ । १४ ॥

स्वेनैव सृष्टोपकरणभावे जाग्रत्पुरुषवद्भुङ्क्ते ॥ १४ ॥

श्रीः ॥ प्रदीपवदावेशस्तथाहि दर्शयति ॥

श्रीः ४ । ४ । १५ ॥

एकदेशस्थितस्याऽपि स्वप्रभारूपज्ञानव्याप्त्या सर्वाऽनुभवः

---

* तै० पुस्तके शरीरादिभावं जैमिनिर्मेन इत्यस्य स्थाने विविधताश्रुतेरित्यस्यान्ते [ देहाद्युपकरणसद्भावं जैमिनिर्मेने ] इति वर्त्तते ॥

[ क ] छा० ७ । २६ । २

सिद्ध्यति "बालाग्रशतभागस्य" इत्यारभ्य "स चानन्त्याय कल्पते" [ ख ] इति हि दर्शयति ॥ १५ ॥

**श्रीः॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि॥ श्रीः ४ । ४ । १६ ॥**

प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् इति वेदनाभाववचनं सुषुप्तिमरणयोरन्यतरापेक्षेणेत्युक्तम् "नाह खल्व यमेवं संप्रत्यात्मानं जानात्ययमहमस्मि" ( ग ) इत्यादिना सुषुप्त्यादावकिञ्चिज्ज्ञत्वमाविष्कृतं हि ॥ १६ ॥

**श्रीः ॥ जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च ॥ श्रीः ४ । ४ । १७ ॥**

अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तं गुणसाम्यं मुक्तस्य जगज्जन्मादिकारणत्ववर्ज्जम् "यतो वा इमानि भूतानि जायन्ते" इत्यारभ्य "तद्ब्रह्म,, इत्यादिर्जगत्सृष्ट्यादि परस्यैवेति प्रकरणादवगम्यते सृष्ट्यादिप्रकरणेषु मुक्तस्यासन्निहितत्वाच्च. मुक्तस्यातिरोहितस्वमाहात्म्यस्याऽनवधिकातिशयानन्दपरिपूर्णपरब्रह्मानुभव एव. ब्रह्मणो जगद्व्यापारो लीलामात्रमिति "लोकवत्तु लीलाकैवल्यम्" २ । १ । ३३ इत्युक्तम् ॥ १७ ॥

**श्रीः ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ श्रीः ४ । ४ । १८ ॥**

इमाँ ल्लोकान्कामान्नीकामरूप्यनुसञ्चरन् " ( घ ) इत्युपदेशात

---

[ ख ] | [ घ ] तै० भृ० १० । ५
[ ग ] छा० ८ । ११ । २

जगद्व्यापारोऽप्यस्तीति चेन्न, हिरण्यगर्भाद्याधिकारिकमण्डलस्थ-भोगोक्तेः न हि तत्र नियमनं श्रुतम् ॥ १८ ॥

श्रीः॥ विकारावर्ति च तथा हि स्थितिमाह ॥

श्रीः ४ । ४ । १६ ॥

विकारासंसृष्टपरिपूर्णपरब्रह्माऽनुभव एव तस्य सुखं तथास्य स्थितिः "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" ( ङ ) इत्याह ॥ १६ ॥

श्रीः॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ श्रीः ४।४।२० ॥

उक्तमर्थं श्रुतिस्मृती च दर्शयतः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "एतस्य वा अक्षरस्य प्रशासने गार्गि !" इत्यादिका श्रुतिः । स्मृतिरपि "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" ( च ) इति ॥ २० ॥

श्रीः ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ श्रीः ४।४।२१ ॥

सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता,, इति ब्रह्मानुभवरूपभोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

---

[ ङ ] तै० आ० २ । ७ । १ । [ च ] गी० १० । ८

कणादपरिपाटिभिः कपिलकल्पनानाटकैः ।
कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ॥
तथागतकथाशतैस्तदनुसारिजल्पैरपि ।
प्रतारितमिदञ्जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥

श्रीः ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥

श्रीः ४ । ४ २२ ॥

"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तत" इति निश्चीयते इति सर्वं समञ्जसम ॥ २२ ॥

इति जगद्व्यापारवर्ज्याधिकरणम्

:०:—:————:—:०:

इति श्रीमद्भगवद्रामानुजाचार्यविरचिते श्रीमति
वेदान्तसारे चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

—:०—:——:—०:—

पादेऽस्मिन् सूत्राणि द्वाविंशतिः ॥ २२ ॥
अधिकरणानि च षट् ॥ ६ ॥
हरिः ओ३म तत्सत्

——::——

समाप्तश्चायं फलाध्यायश्चतुर्थः ॥ ४ ॥

परिसमाप्ता चेयं समन्वयाऽविरोधसाधनफलविषया,
उत्तरमीमांसाचतुरध्यायी

—:०——०:—

परिसमाप्तश्चायं श्रीह्मद्भगवद्रामानुजाचार्य-
विरचितो—

# वेदान्तसारः

॥ श्रीः ॥

## ॥ सूत्राणामकाराद्यनुक्रमणिका ॥

इत्यकाराद्यनुक्रमणिका ॥

समाप्ता ॥

# ॥ शुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| श्रुभा | शुभा | ५ | २४ |
| सम्प्रदा | सम्प्रदा | ८ | १५ |
| कमलोऽभ्यः | कमलेभ्यः | १ | ४ |
| समि पाणिः | समित्पाणिः | २ | ८ |
| समि पाणिः | समित्पाणिः | २ | १४ |
| जगतोः जन्म | जगतो जन्म | २ | २२ |
| नमित्तत्वम् | निमित्तत्वम् | ५ | ६ |
| सर्वः वित् | सर्ववित् | ७ | ३ |
| वद्यत्वने | वद्यत्वेन | ७ | ९ |
| ययत्मनः | ययात्मनः | ८ | ९ |
| बोंद्योऽजीवः | बोंऽद्योजीवः | ८ | ११ |
| वात्माना | वात्मना | ८ | १४ |
| स्याग्रे | स्याग्रे | ८ | १५ |
| सम्भूता | सम्भूतौ | ८ | १८ |
| वेदोन्तवद्यं | वेदान्तवेद्यं | ११ | २ |
| ऽनुप्रावश्य | ऽनुप्रविश्य | ११ | १२ |
| तत्त्वान्नाम | तत्त्वन्नाम | १३ | १३ |
| रभ्यन्तस्मा | रभ्य 'तस्मा | १४ | १२ |
| एष एवानन्दयाह्योति | एषह्येवानन्दयाति | १५ | १२ |
| ब्रह्मे | ब्रह्म | १५ | १५ |
| त्नस्य ॥ त | त्नस्यचत | १६ | २० |
| इतश्चा | इतश्चा | १६ | २१ |
| मनुग्राहा | मनुग्रहा | १८ | २ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| पद्यन्ते | पद्यन्ते | २५ | १२ |
| काम्तृत्वा | काम्तृतत्वा | २८ | १७ |
| पूर्वऽत्र | पूर्वत्र | २९ | ४ |
| अवस्थितेः | अनवस्थितेः | २९ | १६ |
| इन्द्रप्राणाधि | वैश्वानराधि | ३३ | १ |
| पूर्जार्थं | पूजार्थं | ३३ | १४ |
| इतीन्द्रप्राणाधि | इतिवैश्वानराधि | ३४ | ५ |
| धर्मोऽप | धर्मोप | ३७ | ६ |
| सम्पत्या | सम्पत्त्या | ४१ | ७ |
| अनवच्छिन्न | अनवच्छिन्न | ४२ | ६ |
| मत्वाच्च | मत्त्वाच्च | ४२ | १४ |
| नैमित्तक | नैमित्तिक | ४४ | २ |
| अवशू | अपशू | ४७ | १ |
| विव्रुक्त | विवक्तु | ४७ | ५ |
| प्रवृतेश्च | प्रवृत्तेश्च | ४७ | ६ |
| निसृतम् | निःसृतम् | ४७ | १८ |
| रूपार्थन्तर | रूपार्थान्तर | ४८ | १० |
| उत्पत्या | उत्पत्त्या | ५२ | १३ |
| कल्पनोद्देशाच्च | कल्पनोपदेशाच्च | ५२ | १५ |
| पञ्चेद्रिय | पञ्चेन्द्रिय | ५३ | १६ |
| च चक्षुः | चक्षुश्चक्षुः | ५३ | २० |
| हचार्या | हचर्या | ५४ | २ |
| पञ्चजना | पञ्चजना | ५५ | ७ |
| प्रकाश्याका | प्रकाशका | ५४ | ७ |
| ऽतिचेत्त | ऽतिचेत्त | ५५ | १० |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| ताद्विरोध्ये | ताद्विरोधे | ५७ | १० |
| रत्यारम्भ | इत्यारम्भ | ६५ | १२ |
| शरीर | शरीरम् | ६६ | ४ |
| शरीराम | शरीरम | ६६ | ५ |
| फलदयित्वं | फलदायित्वं | ७२ | १० |
| समवागा | समवाया | ७२ | १६ |
| त्वाभ्ययपगमे | त्वाभ्युपगमे | ७२ | २१ |
| तच्छु | तच्छु | ८४ | १६ |
| दिछाया | दिच्छाया | ८८ | १७ |
| श्रेज्योंवि | श्रेज्योंत्स्नावि | ६० | १० |
| करः श्रीः ॥ | करः ॥ श्रीः | ६० | १८ |
| तीयध्या | तीयाध्या | ९१ | १२ |
| पाधीष्व | पाधिष्वि | ६१ | १६ |
| ऋषयः | ऋषयः | ६२ | ७ |
| ऋषि | ऋषि | ९२ | १० |
| इति इति | इति | ९२ | १५ |
| पञ्चवृति | पञ्चवृत्ति | ९३ | १५ |
| तक्रिया | तत्क्रिया | ६३ | १५ |
| स्वयं | स्वयं | ६५ | १७ |
| शस्यन | शस्येन | ६८ | ३ |
| हया । प्रका | हयाप्रका | १०० | ७ |
| शदस्य | शब्दस्य | १०० | १२ |
| काष्णाजि | काष्र्णाजि | १०० | १८ |
| सुष्कृत | सुकृत | १०० | १९ |
| शरीरं | शरीरम् | १०४ | ६ |
| गन्थि | ग्रन्थि | १०४ | १६ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| सपन्नो | सम्पन्नो | १०७ | १३ |
| श्री | श्रीः | ११० | ५ |
| पयन् | म्पयन् | ११० | २० |
| ष्ठितानि | ष्ठितानि | ११० | २० |
| त्सुकृत्ष्टम् | सुत्कृष्टम् | १११ | ११ |
| तेषां | तेषा | १११ | १२ |
| दुस्तरं | दुस्तरतरं | ११५ | ९ |
| सहृतं | संहृतं | ११५ | १२ |
| सिद्धरु | सिद्धिरु | ११६ | ५ |
| चेदैक | चेदेक | ११८ | १० |
| अ०२ | अ०३ | १२० | १ |
| भदात् | भेदात् | १२१ | १६ |
| श्री | श्रीः | १२४ | १० |
| श्री | श्रीः | १३२ | १० |
| विरूद्ध | विरुद्ध | १३३ | ५ |
| न्याग | त्याग | १४३ | १० |
| उर्द्ध | ऊर्द्ध्व | १४३ | १४ |
| करयाम् | करयाम | १४६ | ८ |
| वृत्याथ | वृत्त्याथ | १५१ | ६ |
| यत्रैकोग्रता | यत्रैकाग्रता | १५५ | १७ |
| युजुषाम् | यजुषाम् | १५८ | १२ |
| सम्यद्यते | सम्पद्यते | १५९ | ७ |
| वेमा | वेममा | १५६ | १६ |
| सक्रतु | सत्क्रतु | १६८ | १० |
| सार | सारे | १७२ | १ |
| प०४ | पा०४ | १७३ | १ |

# श्रीयामुनार्याष्टकम्

॥ श्रीमते रामानुजाय नमः ॥

पाषण्डान् खण्डयन्तः प्रबलगुरुमतं मूलतो-
ध्वंसयन्तः । भाट्टानामट्टहासं रुदितपरिणतिं
प्रापयन्तः प्रकामम् ॥ साकं शङ्कासहस्रैर्विवि-
धविरचनां शङ्करादित्रयाणाम् । भिन्दन्तो भान्ति
लक्ष्मीरमणगुणगणैर्यामुनार्यप्रबन्धाः ॥ १ ॥

मायावादिमहापिशाचनिकरान् विद्रावयन्तो-
द्रुतम् । अत्यन्तप्रतिकूलतर्ज्जनविधौ बद्धादराः
सन्ततम् ॥ भक्तानां हृदयञ्च भक्तिविवशं
व्यामोहयन्तो जय—न्त्येते यामुनदेशिकेन्द्र-
रचिता दिव्यप्रबन्धोत्तमाः ॥२॥ शैवाऽऽर्हता-
दिमतघोरमहान्धकारम् । प्रच्छन्नबौद्धमतघूक-
कुलाऽनुकूलम् ॥ उन्मूलयन्नुदयमाप य एष
भूमा । जीयात्स यामुनमुनिर्भुवि कोऽपि
भानुः ॥३॥ पाषण्डपर्वतगतिप्रतिरोधवज्रः ।
प्रच्छन्नबौद्धमततूलकुलाऽऽश्रयाशः ॥ बौद्धादि-
दारुणतमिस्रनिरासंसूर्यः । श्रीमान् सदा
जयति यामुनदेशिकेन्द्रः ॥ ४ ॥

शरद्राकाचन्द्रः श्रुतिनिकरसिन्धोस्तनुभृताम् । कलिग्रीष्मार्त्तानाममृतरसवर्षी जलधरः ॥ कुदृष्टीनां दृष्टिप्रसरणहरः कोऽपिमिहिरः । कृपापीयूषाब्धिर्जयति भगवान् यामुनमुनिः ॥५॥ संसारघोरमरुभूमिगतागतार्त्त—त्राणैकदीक्षणरतो-वचनाऽमृतौघैः ॥ संप्लावयन् विजयते नतकल्पवृक्षः श्रीयामुनो मुनिवरःकरुणाऽमृताब्धिः ॥ ६ ॥ अपारकरुणाम्बुधेरखिलसद्गुणाढ्यस्य वै । कृपैव समवातरत्किमिह यामुनार्याख्यया ॥ न चेत्कुमतिकल्पनाविषविषण्णमेतज्जग—न्निजोक्त्यमृतसीकरैः क इह जीवयेत्तां विना ॥ ७ ॥ त्रैविद्यकल्पलतिकाकुलमूलकन्दस्त्रय्यन्तबाह्यजनसंहतिकालरात्रिः ॥ सद्दर्शनप्रसरणस्य च सुप्रभातम् । श्रीयामुनो विजयते यतिसार्वभौमः ॥ ८ ॥ इति भवदीय ( भाग० ) कृतं श्रीयामुनार्याष्टकं समाप्तम् ॥ श्रियै नमः


उत्तर प्रदेश संस्कृत अ... 
पुस्तकालय
ग्रन्थ आ० सं० 3678
संस्कृत भवनम् लखनऊ

श्रीसुदर्शनबलभद्रसुभद्रासमेताय
श्रीजगदीशपरब्रह्मणे नमः

